# निरुक्तचिन्तनम्

लेखकः
डा. दिद्दिगि वंशीकृष्णः एम्.ए., पिहेच्.डि.

प्रकाशनम्
शिंशुमारशोधप्रतिष्ठानम्
मैसूरु
2020

**NIRUKTACINTANAM authored by Dr. Diddigi Vamsi Krishna and published by Shimshumara Shodha Pratishthanam, #97, SRIKARA, 2nd Main, 4th Cross, Railway Layout, Bogadi, Mysuru-26.**
**Mob: +91-9066420600**



First Edition : 2020

Copies : 200

Pages : 187+XI

Price : Rs. 150/-

ISBN : 978-81-946951-0-3

Printed at : **Vani Press**
1098/4, Geetha Road,
Chamarajapuram, Mysuru - 570005.

# निवेदनम्

अध्यायचतुष्टये रचितोऽयं "**निरुक्तचिन्तनम्**" इति ग्रन्थः यास्कनिरुक्तस्य विषयबोधकः। अस्य ग्रन्थस्य रचनाय निरुक्तस्थानां विषयाणां अध्ययनम् एवमेव यास्कस्यापि इतरेषां निरुक्तकाराणां च कालविषयस्य मथनं कृतम्। अस्य ग्रन्थस्य पीठिकाभागोऽपि ग्रन्थभाग इत्येव स्वीकृत्य सम्बद्धानां सर्वेषां विषयाणां प्रस्तावना ग्रन्थभाग एव कृता। एवं संशोधितं रचितञ्च ग्रन्थं लोके जनाः अस्य पुस्तकस्य पठनेन निरुक्तविषयकं लवलेशमेवापि अवलीलया ज्ञातुं शक्यन्ते इति आशास्ये।

एवमेवास्य ग्रन्थस्य रचनायां सर्वथा सहकृद्भ्यः मैसूरु-विश्वविद्यानिलयस्थस्य संस्कृताध्ययनविभागस्य गुरुमुख्येभ्यः **डा.के.नारायणभट्ट**महोदयेभ्यः सहृदयं सविनयञ्चाभिवन्दे ।

ग्रन्थस्य प्रकाशनाय सहकृतायै "**शिंशुमारशोधप्रतिष्ठानम्**" इति संस्थायै अहं चिरर्णी भवामि। एवमेव मुद्रणकार्याय सहकृते मैसूरुनगरस्थस्य वाणी-मुद्रणालयस्य मुख्यस्थाय **श्रीनिवास**महोदयाय हृत्पूर्वकान् धन्यवादान् समर्पयामि।

एवमेव माम् अध्ययनाय प्रेरितवद्भ्यां मम पितृभ्यामहं पादाभिवन्दनानि अर्पयामि। अपि च अस्य ग्रन्थस्य रचनाकाले प्रत्यक्षं परोक्षं च मम मतिं मथितवतां सर्वेषां सहृदयानां सादराभिवन्दनानि व्याहरामि।

**- डा. दिद्दिगि वंशीकृष्णः**

# विषयसूची

॥ श्रीः ॥

# निरुक्तचिन्तनम्

## प्रथमोऽध्यायः

## यास्कचिन्तनम्

यास्कीयं हि निरुक्तं वस्तुतो वैदिकी व्याख्यैव। निरुक्तमिदं निघण्टुपरनामकस्य पञ्चाध्यायात्मकस्य समाम्नायस्य व्याख्यानरूपेणोत्पन्नम्। योऽयं मूलभूतः समाम्नाय आचार्याणां सौकर्याय दुर्बोधार्थानां वैदिकशब्दानां सङ्कलनेन सम्पादितः। सः कश्चित् वैदिकशब्दकोशः। अस्तु परं किमिदं निरुक्तम्? इति सर्वेष्वपि एकः प्रश्नः सञ्जायते। अस्य प्रश्नस्य समाधानं निरुक्त एव लभ्यते। न केवलं निरुक्ते अपि तु ऋग्भाष्यभूमिकायां सायणस्त्वेवमाहुः- "अतिगम्भीरस्य वेदस्यार्थमव-बोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि। अत एव तेषामपरविद्यारूपत्वम्" इति। मुण्डकोपनिषद्याथर्वणिका आमनन्ति- "द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति। परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते" इत्यनेन साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां वेदानामपरविद्यात्वम् सिद्ध्यति। अपि च परमपुरुषार्थब्रह्मज्ञानहेतुत्वात् उपनिषदां परविद्यात्वम् सिद्धयति।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

वेदाङ्गानि निरूप्य प्रासङ्गिकेन अपरविद्यानिरूपणविषयमवबोधयितुं वेदाः निरूप्यन्ते। तत्रादौ यथाक्रममङ्गानि व्याख्यायन्ते। वेदाः शब्दात्मकाः। अत एव उच्चारणप्रधानाः। तस्मादादौ उच्चारणविषयकम् अङ्गं व्याख्यास्यामः।

## वेदाङ्गानि

**शिक्षा :-**

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीयोपनिषदः आरम्भे- "शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शीक्षाध्यायः" इति। तस्मात्स्वरवर्ण-दोषादिजनितापराधपरिहाराय वेदावगमने शिक्षाग्रन्थः अपेक्षितः।

**कल्पः :-**

कल्पस्तु आश्वलायनापस्तम्बबोधायनादिसूत्रम्। कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्त्या कल्पः सिद्ध्यति। अस्मादेव व्युत्पत्तेः ज्ञायते यत् कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति इति। तस्मात् शिक्षा इव वेदावगमनार्थं कल्पोऽपेक्षितः।

**छन्दः :-**

वैदिकमन्त्राः छन्दोमयाः सङ्कलिताः। अतः वेदे तत्र तत्र छन्दोविषयाणां विहितत्वात् छन्दोग्रन्थोऽपि वेदाध्ययन उपयुज्यते। "यो ह वा अविदितार्षेयच्छन्दोब्राह्मणेन मन्त्रेण योजयति वाध्यापयति वा स्थाणुं वर्च्छति ; गर्त्तं वा पद्यति ; प्र मीयते ; पापीयान् वा भवति ; यातयामान्यस्य
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

छन्दांसि भवन्ति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्।"[1] इति श्रूयते। अनेन ज्ञायते यत् छन्दसानवगत्या मन्त्रोच्चारणं दोषभागवतीति। तत्र वरम्। अत्र यत्फलं वेदाध्ययने छन्दोग्रन्थेन जायत इति श्रुतिरुच्यते तस्मात्तत्फलवेदनाय छन्दोग्रन्थ उपयुज्यते।

## ज्योतिषम् :-

ज्योतिषस्य प्रयोजनं स्वयं ज्योतिर्ग्रन्थेष्वेव विहितमस्ति "यज्ञकालार्थसिद्धये" इति। अस्मिन्नेव ज्योतिषे कालविशेषविधयश्चापि वर्तन्ते- "संवत्सरमेतद्व्रतं चरन्त्संवत्सरमुख्यं भूत्वा" इत्येवमादयः संवत्सरविधयः। "वसन्ते ब्राह्मणोऽग्निमादधीत ; ग्रीष्मे राजन्य आदधीत ; शरदि वैश्य आदधीत" इत्याद्या ऋतुविधयः। "मासि मासि सत्रपृष्ठान्युपयन्ति ; मासि मास्यतिग्राह्या गृह्यन्त" इति मासविधयः। "यं कामयेत वसीयान्त्स्यादिति तं पूर्वपक्षे योजयेदित्याद्याः पक्षविधयः। एकाष्टकायां दीक्षेरन् फल्गुनीपूर्णमासे दीक्षेरन्" इत्याद्यास्तिथिविधयः। "प्रातर्जुहोति सायं जुहोति" इत्याद्याः प्रातःकालादिविधयः। "कृत्तिकास्वग्निमादधीत" इत्याद्या नक्षत्रविधयः। कालविशेषविधीनां बोधनाय ज्योतिश्शास्त्रस्य अवश्यकता वर्तत एव। वैदिककर्मणि देशपात्रादिवत् कालस्यापि महत्त्वं विद्यते। विहिते काले कृतं चेत् सफलवत्

[1] सामार्षेयब्राह्मणम् १ खण्डः

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

भवति। विहितकालावगतिः ज्योतिषाध्ययनेन साध्या। अत एव कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते।

**व्याकरणम् :-**

व्याकरणं प्रकृतिप्रत्ययाद्युपदेशेन पदस्य स्वरूपं तदर्थञ्च बोधयति। व्याकरणशास्त्रव्यासङ्गो भारतभूमौ यास्काचार्यात् प्रागेव आरब्धो भवितुमर्हति। यतो हि यास्काचार्यः प्राचामुदीचां च वैयाकरणानां मतभेदान् निर्दिशति। शाकटायनगार्ग्याचार्यादीन् प्रमुखान् पूर्वान् वैयाकरणांश्च स्मरति। निरुक्ते नाम्नां धातुजत्वविषये सरसः कश्चन वादः श्रूयते। शाकटायनः सर्वाणि नामानि धातुजानीति तस्य मतं स्थापयति। गार्ग्यादयः केचन वैयाकरणाः तन्मतं खण्डयन्तो तेषामेव मतमितरं निरूपयन्ति। ते तु केषाञ्चिदेव नाम्नां धातुजत्वम् अभ्युपयन्ति। यास्काचार्येण तेषामेषः प्रतिपक्षः साधिक्षेपं प्रतिक्षिप्यते। नाम्नां धातुजत्वनियममुक्त्वैव समग्रं पाणिनीयं तन्त्रं प्रतिष्ठितम्। पाणिनीये व्याकरणे प्राधान्येन लौकिका एव शब्दाः व्याचिकीर्षिताः। तत्र पाणिनीये व्याकरणे वैदिकास्तु शब्दाः अपवादविधया व्याक्रियन्ते। परन्तु पाणिनिः स्वव्याकरणे पूर्वान् वैयाकरणान् तत्र तत्र उल्लङ्घ्यैव नवीनं पन्थानमाश्रितः इति तदध्ययनेनावगम्यते। पाणिनेः प्राक्तनः शब्दशास्त्रविषयकः ग्रन्थः सम्प्रति यास्कनिरुक्तमेकमेवोपलभ्यते। वेदस्य शब्दात्मकत्वात् शब्दशास्त्रम् इति विख्यातस्य व्याकरणस्य अवगतिरत्राङ्गत्वेन प्रतिपाद्यत एव।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**निरुक्तम् :-**

अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। "गौः ग्मा ज्मा क्ष्मा क्षा क्षमा" इत्यारभ्य "वमवः, वाजिनः, देवपत्न्यो, देवपत्न्यः" इत्यन्तो यः ग्रन्थः पदानां समाम्नायः समाम्नातः। तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते। किन्तु तत्र एतावन्ति पृथिवीनामानि एतावन्ति हिरण्यनामानि इत्येवं स्पष्टम् अभिहितम्। एतत्तु न्निरुक्तम् त्रिकाण्डम्- नैघण्टुकम् नैगमम् दैवतमिति। एतस्मिन् काण्डत्रयात्मके पञ्चाध्यायरूपे च ग्रन्थे परनिरपेक्षतया पदार्थोक्तत्वात् तस्य निरुक्तत्वम् प्रसिद्ध्यति।

तद्व्याख्यानञ्च "समाम्नायः समाम्नातः" इत्यारभ्य "तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति" इत्येतैर्द्वादशभिरध्यायैर्यास्को इमं ग्रन्थं निर्ममे ; तदेव निरुक्तमुच्यते। एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्ते इति व्युत्पत्त्या तस्य ग्रन्थस्य निरुक्तत्वं सिद्ध्यति। एतेषां वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वं शिक्षायामुदीरितम्-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥** इति।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

अस्मिन् श्लोके वेदपुरुषो वर्णितो दृश्यते। वेदपुरुषसाक्षात्काराय षण्णां वेदाङ्गानां अध्ययनमवश्यमिति दिक्। तर्हि कोऽयं वेद इति प्रश्नोऽपि सर्वेषु मनस्सु सञ्जायते। न केवलं एकस्यैवापि तु उद्धृतानामितरेषामपि प्रश्नानां समाधानानि अग्रे उपाध्याये दीयते।

अत्र किञ्चित्प्रासङ्गिकमुच्यते। तैत्तिरीयारण्यकोपनिषदि हि "शीक्षाम्" इति दीर्घेकारश्रवणात् औपनिषदः शिक्षाध्यायस्तु शिक्षणीयविद्यानां नामबोधक एव। तथा च शिक्षाग्रन्थेषु वर्णोऽकारादिः, स्वर उदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादिः, सन्तानः विकर्षणादिः- एतेषां बोधनमेव शिक्षाग्रन्थप्रयोजनमित्युपदेशः फलितः। ते तु शिक्षाग्रन्थाः बहवः वर्तन्ते। तेषु त्रिंशत्सङ्ख्याका एव अस्माभिर्दृष्टाः। ते च-

१. याज्ञवल्क्यशिक्षा
२. वासिष्ठीशिक्षा
३. कात्यायनीशिक्षा
४. पाराशरीशिक्षा
५. माण्डव्यशिक्षा
६. अमोघानन्दिनीशिक्षा
७. लघ्वमोघानन्दिनीशिक्षा

१६. क्रमसन्धानशिक्षा
१७. गलदृक्छिक्षा
१८. मनस्स्वारशिक्षा
१९. प्रातिशाख्यप्रदीपशिक्षा
२०. वेदसूत्रपरिभाषाशिक्षा
२१. यजुर्विधानशिक्षा
२२. स्वराष्टकशिक्षा
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

| | |
|---|---|
| ८. माध्यन्दिनीशिक्षा | २३. क्रमकारिका शिक्षा |
| ९. लघुमाध्यन्दिनीशिक्षा | २४. पाणिनीयशिक्षा |
| १०. अमरेशीशिक्षा | २५. नारदीयशिक्षा |
| ११. केशवीशिक्षा | २६. गौतमीशिक्षा |
| १२. स्वराङ्कुशशिक्षा | २७. लोमशीशिक्षा |
| १३. षोडशश्लोकीशिक्षा | २८. व्यासशिक्षा |
| १४. अवमाननिर्णयशिक्षा | २९. शौनकीयशिक्षा |
| १५. स्वरभक्तिलक्षणशिक्षा | ३०. अथर्वणशिक्षा |

एताः शिक्षाः नापि चैकविषयाः। सर्वाः शिक्षाः विभिन्नविषयप्रधानाः, अपि च विभिन्नवेदशाखीयाः। यथा- सामवेदीय-स्वरसामसन्तानादीनां विज्ञानाय "नारदीया" "लोमशी" "गौतमी" चेति एता तिस्रः शिक्षाः सामवेदमात्रस्यैव। सर्वासां शिक्षाणां तैत्तिरीयाम्नातत्वेन वर्णस्वराद्यन्यतमविषयत्वेन शिक्षा इत्येकेनैव पदेन ग्रहणमिति सर्वासामुक्तशिक्षाणाम-ङ्गत्वकल्पनम्। एवमेव कल्पग्रन्थानामपि शाखाभेदजन्यत्वात् अनेकत्वं स्वीकार्यम्। सामवेदस्य लाट्यायनसूत्रम्, द्राह्यायणसूत्रम्, उपग्रन्थसूत्रञ्चेति त्रयः कल्पग्रन्थाः लोके अद्यापि विप्लुताः भवन्ति। तथा च तैत्तिरीयकानां बोधायनापस्तम्बसूत्रे हिरण्यकेशि च
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

वर्तन्ते। शिक्षाकल्पाविव व्याकरणान्यपि बहूनि वर्तन्ते। तत्र व्याकरणेषु पाणिनीयस्यैव ग्रन्थस्य उपलब्धिः दृश्यते। अन्येषामपि शाकटायनादीनां व्याकरणान्यपि लभन्ते। परन्तु लोके पाणिनीयस्य व्याकरणस्य विशिष्टस्थानत्वात् तेषां पाठः न प्रसिद्धः। अत एव पाणिनीयस्य व्याकरणस्य एकस्यादिसर्वतोमुखत्वम् सिध्यति। प्रातिशाख्यानां तु प्रतिशाखमेकैकमिति नामत एवावगम्यते। सामवेदस्य स्वरविकर्षणादीनां उपदेशाय विशेषतः बहूनि व्याकरणानि समाम्नातानि। तेषाम् इमान्येव उपलभ्यन्ते- सामतन्त्रम्, अक्षरतन्त्रम्, पुष्पसूत्रम्, पञ्चविधसूत्रम्, निदानसूत्रम्, अनुपदसूत्रम्, तण्डालक्षणसूत्रम्, कलसूत्रम् (एतौ द्वौ सूत्रग्रन्थौ ऐतरेयालोचनमिति ग्रन्थे उल्लिखितौ) चेति। एतानि अद्यापि पश्चिमे भारते अध्ययनाय उपलभ्यन्ते। निरुक्तमूलग्रन्थस्तु निघण्टुरिति नाम्ना चिरादपि विज्ञात एव। अर्थात् अयं यास्कस्य निरुक्तग्रन्थः कश्यपनिघण्टुग्रन्थस्य भाष्यरूपमिति ज्ञायते। यास्कीयं निरुक्तमेकमेव इदानीमुपलभ्यते।

परन्तु सर्ववेदानां भाष्यकारस्य सायणस्य मते द्वे निरुक्ते दृश्येते। मूलं निघण्टुनाम्ना पञ्चाध्यायी। तद्याख्यानञ्च निरुक्तनाम्ना द्वादशाध्यायी। सायणः तस्य ऋग्भाष्यभूमिकायां शब्दव्युत्पत्तिप्रकारः द्विविध इति उक्तवान्- "अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्" इति ; "एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निश्शेषेणोच्यन्ते तन्निरुक्तम्" इति च। एवमेव सायणमते यन्निरुक्तपदं श्रूयते तच्च पदं

निघण्टुनिरुक्तयोर्बोधकम्। कथमिति चेत्- पूर्वोक्तविधया शिक्षा इति नाम्ना यथा त्रिंशद्वेदानां शिक्षाणां अङ्गीकारः वर्तते तथैव निरुक्तम् इति नाम्ना उभयोरपि वेदाङ्गत्वम्। निघण्टुः निरुक्तमिति द्वयोः ग्रन्थयोः वेदाङ्गनिरुक्तमित्येकनाम्ना बोधकत्वात् वेदाङ्गानि षड्सङ्ख्याकानि इति अवितथम्।

## कोऽयं वेदः?

अत्र एको विषयः विचार्य एव। स तु वेदाङ्गानां अध्ययनात् वेदाध्ययनविधिः वेदार्थनिर्णयश्च जायते। परन्तु कोऽयं वेदः? वेदशब्दस्य कीदृशी व्युत्पत्तिमवगन्तुं शक्यते? वेदस्य लक्षणं किम्? स्वरूपश्च कः? इति प्रश्नचतुष्टयम् उदेति। तत्समालोचनायात्र किञ्चित्प्रसङ्गः क्रियते।

वेदः खलु मानवमात्रस्य प्राचीनतमः शब्दमयो ज्ञानराशिः। वेदशब्दः विद्-ज्ञाने इति ज्ञानार्थे विद् धातोरुद्भूतः। मन्त्रगण एव वेदः। तस्मिन् आध्यात्मिकं तथा च जीवनस्य व्यावहारिकं ज्ञानं सम्मिलितम् भवति। यदि वयं कस्यचित् जनस्य समाजस्य वा कर्तव्यविषये धर्मविषये वा किञ्चित् ज्ञातुमिच्छामस्तदा तत्सर्वं वेदेषूपलभ्यते। अस्य विश्वस्य सृष्टिः कदा केन साधनेन केन वा पुरुषेण कृता इत्ययं विषयः वेदेष्वेव विचारितः। काः शक्तयः संसारे कथं कार्यं सम्पादयन्ति इति वेदयति वेदः यदेव वेदेनोच्यते सर्वमेतज्जगत् यज्ञमयं वर्तते इति। मनुष्यः मनसा कथं विचारयति? कथं परमेश्वरः सर्वेषां जीवानां सञ्चालनं करोति?, कथं च

सर्वज्ञः सः सर्वं जानाति? इत्येतत्सर्वं वेदाः बोधयन्ति। राज्ञां व्यवहारविषये व्यापारिणामाचरणविषये सर्वेषां स्वास्थ्यविषये च महत् ज्ञानं वेदेषु लभ्यते। न केवलमेतज्ज्ञानं वेदेषु लभ्यतेऽपि तु सर्वविषयकं ज्ञानमत्रैव वर्तते। यदेकम् महाभारतसम्बद्धम् वाक्यं तच्च वेदान्वितमपि वर्तते- "यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्" इति।

**वेदलक्षणम् :-**

"विद्यन्ते ज्ञायन्ते लभ्यन्ते वा एभिर्धर्मादिपुरुषार्था इति वेदाः" इत्येतद्वेदशब्दव्युत्पादनं देवमित्रपुत्रेण विष्णुमित्रेण बह्वृक्प्रातिशाख्य-वृत्त्युपक्रमे कृतं दृश्यते। "प्रत्यक्षानुमानागमेषु प्रमाणेषु अन्तिमो वेदः" इति। "समयबलेन सम्यक् परोक्षानुभवसाधनम् वेदः" इति। "अपौरुषेयं वाक्यं वेदः" इत्यादीनि च वेदलक्षणानि सायणीयऋग्भाष्यभूमिकायां दृश्यन्ते। सायणेनैव "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः" इति तस्य कृष्णयजुर्वेदभाष्यभूमिकायां वेदस्य व्युत्पादनलक्षणम् उक्तम्। एवमेव-

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥**

अस्मात् श्लोकादेव ज्ञायते यत् वेद एव सर्वप्रमाणम्। किन्तु प्रत्यक्षादिभिः प्रमाणैः यदा समस्यानां उपायो नाविद्यत तदा वेद एव तस्य उपायो बोधयति। अर्थात् पापपुण्यादिविषयकं ज्ञानं बोधयतीति समन्वयः

कर्तव्यम्। तस्मात् वेदस्य वेदत्वमिति वेदशब्दस्य विशेषणं बोधितम्। "स एवोपायो वेदस्य  विषयः ; तद्बोध एव प्रयोजनम् ; तद्बोधार्थी चाधिकारी ; तेन वेदबोधनयोः महोपकार्योपकारकभावश्च सम्बन्धः"  इति।

**वेदस्वरूपम् :-**

बोधायनेन च वेदस्य स्वरूपमेवं प्रदर्शितम्- "मन्त्रब्राह्मणमित्याहुः" इति। आपस्तम्बेन च यज्ञपरिभाषायां "मन्त्रब्राह्मण-योर्वेदनामधेयम्" इति। सर्ववेदभाष्यकारेण सायणाचार्येणापि आपस्तम्बीय-लक्षणमवलम्ब्य ऋग्भाष्यभूमिकायां बहुधा प्रपञ्चितम् सिद्धान्तितञ्च। तेष्वेकं यथा "मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः" इति। भगवान् जैमिनिरपि मुनिः तस्य सर्वानुक्रमणीवृत्तिभूमिकायां तद्विषयं अनुश्लोकितवान्-

**मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः।**
**विनियोक्तव्यरूपो वः स मन्त्र इति चक्षते॥**

**विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि।**
**विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते॥**

**ऋग्यजुस्सामरूपेण मन्त्रो वेदचतुष्टये।**
**अहेर्बुध्नीयमन्त्रं मे गोपयेत्यभिधीयते॥**

**ऋक् पादबद्धा गीतं तु साम गद्यं यजुर्मन्त्रः।**
**चतुर्ष्वपि मन्त्रेषु त्रिधैव विनियुज्यते॥**

**वेदैरशून्य इत्यादौ मन्त्रे त्रैविध्यमुच्यते।**

**प्रस्तुतत्त्विंग्विनियोग ऋचान्त्वो मन्त्रे यज्ञकारणे॥**

**सर्वैर्ब्रह्मा निरुक्तेऽपि चतुर्भिरिति निर्णयः।**

**ऋग्रूपमन्त्रबाहुल्यादृग्वेदः स्यात्तथेतरौ॥**

**शान्तिपुष्ट्यादिकब्रह्मवर्गप्रणवविद्यया।**

**ऋचां च यजुषां तुर्य्यो बाहुल्येन विधायकः॥**

**एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः।**

**सहस्राध्वाः सामवेदो यजुरेकशताध्वकम्।**

**नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्॥** इति।

एतैरेव श्लोकैः सर्वेषां वेदानां समासादपि स्वरूपपर्यन्तं जैमिनिमुनिरुक्तवान्। एतेषां वेदानां स्वरूपविषये श्लोकोक्तविषयादप्यन्यः न किञ्चिदपि वक्तुं शक्यते।

परन्तु अत्रैवालोच्यमस्ति यत् आपस्तम्बादिमतानुगाः सायणाचार्यादयस्तु मन्त्राणां ब्राह्मणानाञ्च वेदत्वं चिरात् सिद्धमिति मन्यन्ते। केचित्तु अद्यतनाः ब्राह्मणग्रन्थेषु बहुत्र 'य एवं वेद' इति दर्शनादेव वेदः प्रथमं ब्राह्मणग्रन्थरूपेणावर्तन्त। तदनन्तरकाले तु सः वेदः मन्त्ररूपेणोपचरितः इति उच्यन्ते। वयं तु तद्विषयः विपरीत इति ब्रूमः। किन्तु अपरविद्यापर्याय एवायं वेदशब्द आसीत्। तथा यतश्च सर्वासामेव विद्यानां निधानानि इमे

मन्त्राः प्रदृष्टाः। अतः मन्त्रकाल एव त्रिविधानां मन्त्राणां वाचकः सम्पन्नो वेद् इति। ततः ब्राह्मणकाले ब्राह्मणेष्वपि ग्रन्थेषु मन्त्रमात्रपर एव वेदशब्दो व्यवहृतः। पश्चात् सूत्रकाले तु मन्त्रब्राह्मणयोरुभयोरेव विद्यानिधानत्वेन आदरातिशय-स्थितेरुभयोरेव बोधकः वेद् इति सञ्जातः। अत्र तु त्रयः पक्षाः सम्पद्यन्ते-

१. मन्त्रब्राह्मणयोर्वेदत्वम्

२. ब्राह्मणग्रन्थानामेव मुख्यं वेदत्वम्

३. सर्वविद्यानिधानानां हि मन्त्राणामेव वेदत्वम्

इति व्यवहारो मुख्योऽतिपूर्वकालिकश्चेति। अथैतेषां कतमः पक्षो ज्यायान् इति पूर्वापरदर्शिभिः माध्यस्थधिषणावद्भिश्च पण्डितैरेवालोच्यम्।

त्रयीपरो मन्त्र एव शुक्लयजुर्वेदे श्रूयते- "वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः"[2] इति। "प्रजापतिः सुतासुतौ = सुतासुतयोः रूपे वेदेन = ज्ञानेन, त्रय्या विद्यया वा व्यपिबत् = विविच्य पीतवान्। सुतः = सोमः ; असुतः = पयः परिमुच्च" इति तस्य व्याख्यानं महीधरेण भाषितम्। परन्त्वत्र वेदेनेत्यस्य द्विविधोऽर्थः कृतः दृश्यते- "ज्ञानेन त्रय्या वा विद्यया" इति। मन्त्रे 'वेदेन' इत्याद्युदात्तश्रवणात् तत्र द्वितीयोऽर्थ एव इति अस्माकं कृते तु युक्ततरो वर्तते। वेदशब्दः उञ्छादिगणे[3] हि करणव्युत्पाद्यो

---

[2] शुक्लयजुस्संहिता १९-७८ मन्त्राः

[3] उञ्छादिगणः ६।१।१६०

यौगिकोऽन्तोदात्त इति पाठितः। एवमेव अपरे वृषादिगणे[4] त्रय्यां रूढः आद्युदात्तो हि वेद इति पाठितः। अत एव श्रुतस्य "यः समिधा"[5] इति व्याख्याने सायणाचार्येण भाषितम् यत् "वेदेन = वेदाध्ययनेन" इति। तैत्तिरीयसंहितायाम[6]पि त्रयीपरो आद्युदात्तवेदशब्दः अस्त्येव। तथा हि संहितायां वेदशब्दं आथर्वणिका अपि असकृदित्यामनन्ति। यथा- "यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनातितराणि मृत्युम्"[7] इति। अत्र तु वेदा इत्यस्य ऋगादय इति बुध्यते। तथा तत्रैवोनविंशकाण्डेऽपि त्रिशः श्रुतो वेदशब्दः त्रयीपर एव। तदेवं सर्वसंहितास्वेव त्रयीपरो वेदशब्दः श्रूयत एवेति मन्त्राणां वेदत्वं सिद्धम्।

एवं ब्राह्मणेष्वपि सर्वत्र श्रूयते यत् वेदः त्रयीपर एवेति। तथा हि ऐतरेयब्राह्मणस्य बह्वृचि- "त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् तान् वेदानभ्यतपत्"[8] इति। एवमेवान्यत्रापि तत्रैव[9] वर्तते। तैत्तिरीयब्राह्मणेऽपि तृतीयकाण्डे[10] त्रयीपरो

---

[4] वृषादिगणः ६।१।२०३

[5] ऋक्संहिता ६।१।५

[6] तैत्तिरीयसंहिता ७।५।११।२

[7] अथर्वसंहिता ४।७।५।६

[8] ऐतरेयब्राह्मणम् ५।५।६

[9] ऐतरेयब्राह्मणम् ६।१५ ; ७।१८

[10] तैत्तिरीयब्राह्मणम् ३।१०।११।४

वेदशब्द एव श्रूयते। तथा छान्दोग्यब्राह्मणे[11] च "स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्" इत्यादि। अथर्वब्राह्मणेऽपि- "इमे सर्वे वेदाः"[12] इत्यादि। तदेवं सर्वब्राह्मणेषु च त्रयीपरो वेदशब्द एव श्रूयते। अस्माच्च मन्त्रमात्राणामेव वेदत्वं सिद्ध्यति।

तत्र वेदेषु सर्वसंहितासु त्रयीपरवेदशब्ददर्शनमेव प्रमाणम्। मन्त्रव्याख्यानार्थकानां ब्राह्मणग्रन्थानां अनाविर्भावात् मन्त्रकाले मन्त्राणामेव वेद इति व्यपदेश आसीत्। प्रदर्शितानि ब्राह्मणवाक्यानि च तदेव दृढयन्ति। अत एव तत्रोपपद्यन्ते- "इमे सर्वे वेदाः"[13] इत्यत्र विशेषणानि "सर्वब्राह्मणाः" प्रभृतीनि। यास्कस्य निरुक्ते चार्थज्ञप्रशंसनाय ये शाखान्तरीयमन्त्राः उद्धृताः तेषामपि त्रयीपरवेदशब्द एव श्रूयते- "अधीत्य वेदम्"[14] इति। अस्मादेव मन्त्रकाले मन्त्रार्थक एव वेदशब्दः प्रसिद्ध आसीदिति ज्ञायते। निरुक्तेऽप्याह- "कर्मसम्पत्तिर्मन्त्रो वेदे"[15] इति। स हि कर्मसम्पत्तिदः मन्त्रः संहितासु वा ब्राह्मणेषु क्वास्ति इत्यस्य प्रश्नस्य यास्कस्तु निरुक्ते संहितार्थ एव कर्मसम्पत्तिरिति वेदे वेदशब्दः अभिधीयते इति तस्य मतं दर्शितवान्।

---

[11] छान्दोग्यब्राह्मणम् ९।१।२

[12] गोपथब्राह्मणम् १।२।९

[13] गोपथब्राह्मणम् १।२।९

[14] निरुक्तम् १।६।२

[15] निरुक्तम् १।१।२

एवमपि ज्ञानार्थस्य विद्-ज्ञाने इति धातोः रूपं वेदः विद्यैवेति तस्य स्वयं वेद एव यौगिकार्थः प्रतिपादयति। अनन्ताश्च विद्याः इह जगति चिररात्राय सन्ति। तत एव सर्वे आचार्याः वेदस्य सनातनत्वमनन्तत्वञ्च मन्यन्ते। तथापि मन्त्रेष्वेव वेदशब्दस्य मुख्या शक्तिः वर्तत इति दृश्यते। तथा ह्यामनन्ति- "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। त ँ॒ जीर्णि ँ॒ स्वविवर ँ॒ शयानम् ; इन्द्र उपवज्र्योवाच। भरद्वाज! यत्ते चतुर्थमायुर्दद्याम् ; किमनेन कुर्य्याम् इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। त ँ॒ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार ; तेषा ँ॒ हैकैकस्मान्मुष्टिमाददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते ; अनन्ता वै वेदाः ; एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोवाचथाः। अथ त इतरदननूक्तमेव"[16] इति।

छान्दोग्येऽपि[17] वेदपर्यायो विद्याशब्दः श्रूयते। तथा हि- "प्रजापतिर्लोकानभ्यतपत्। अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीविद्यामभ्यतपत्।" इत्यादयः। एवमेव तत्रैव अन्यत्रापि[18] दृश्यते। अतः सुष्ठूक्तमस्माभिः 'पुरासीत् विद्यापर्याय एवायं वेदशब्दः आसीत्'

---

[16] तैत्तिरीयब्राह्मणम् ३।१०।११।३-४

[17] छान्दोग्यब्राह्मणम् १।१७।१-१०

[18] छान्दोग्यब्राह्मणम् ४।२१।१ ; ४।२३।२

इत्यादि तथा चैषः पक्षो युक्ततम एवोपन्यस्त इति मन्त्रेष्वेव वेदशब्दस्य मुख्या वृत्तिः सम्भाव्यते।

आपस्तम्बादिसूत्रप्रणयनकाले तु ब्राह्मणग्रन्थानामपि वेदत्वं व्यपदिष्टम्। ततःप्रभृति सिद्धमेव "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। अत एव नारदीयमनुसंहितायामपि "वेदः चत्स्रोऽधिगन्तव्यः"[19] इत्यादिषु मन्त्रेषूभयोरेव ग्रहणमवगम्यते। अत एवैषा सङ्गच्छते-

**उदितेऽनुदिते चैव समयाध्युषिते तथा।**

**सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः॥**[20] इति।

"उदिते जुहोति"- इत्यादिविधयस्तु ऐतरेयब्राह्मणादिषु विश्रुताः। तथा च "श्रुतिस्तु वेदो विज्ञेयः"[21] इत्यत्र च श्रुतिलक्षणे मन्त्राणां ब्राह्मणानाञ्च ग्रहणमिष्टमिति प्रतीयत एव। तथा च श्रुतिरिति वेदशब्दस्य नामान्तरमिति ज्ञायते।

**श्रुतिः :-**

श्रवणात् श्रुतिरिति व्याख्या। "श्रू-यजीषिस्तुभ्यः करणे"[22] इत्यस्मात् निष्पादितः श्रुतिशब्दः श्रवणेन्द्रियपरः। इह तु "स्त्रियां क्तिन्"[23]

---

[19] नारदीयनारदीयमनुसंहिता २।१६५

[20] नारदीयनारदीयमनुसंहिता २।१५

[21] नारदीयनारदीयमनुसंहिता २।१०

[22] अष्टाध्यायी ३।३।९५ ; वार्तिकः २

[23] अष्टाध्यायी ३।३।९४

इति भावार्थ एव क्तिन् प्रत्ययः। अर्थात् एष हि वेदश्चिरमेव गुरुपरम्परारूपेण श्रूयत इति। अर्थात् गुरुमुखेन शिष्यान् प्रति वेदमन्त्राणां बोधनेन शिष्याः तान् मन्त्रान् श्रुत्वा अवगमयन्ति इति। अत एव वाय्वादिवत् अनादिरपौरुषेयश्चेति स्तूयत अयं वेद इति वृद्धा आमनन्ति।

मन्त्रसंहितासु क्वचिदपि वेदार्थे श्रुतिशब्दस्य दर्शनाभावात् मन्त्रकाले तु अयं श्रुतिशब्दः वेदपरो व्यवहृतो नासीत् इति केषाञ्चिदाक्षेपकृतां मतम्। स एव प्रवादार्थः श्रुतिशब्दो ब्राह्मणकालादुत्तरं मन्त्रब्राह्मणयोरुभयोरपि वाचकः सम्पन्नः। तथैवैतत्- "सेयं विद्या श्रुतिमतिबुद्धिः"[24] इति।

**अनुश्रवः :-**

वेदस्य श्रुतिमूलत्वात् अनुश्रव इत्यपि नाम वर्तते। तथा हि "दृष्टवदानुश्राविकः"[25] इति। एवमेव "गुरुमुखादनुश्रूयत इत्यनुश्रवो वेदः"[26] इति। बहुत्र लौकिकवाक्यानामपि श्रुतिरिति व्यवहारो दृश्यते। तदेवं यस्य कस्यचिच्छब्दस्य वाक्यस्य वा प्रचारकालस्यादिः न निर्णीयते। यथा- कदा केन कथितमिदमिति। परन्तु प्रामाणिकतया गुरुपरम्परोपदेशो लभ्यते। तदेव वैदिकं वाक्यं श्रुतिरिति वाभिधीयते। विहितानां विधीनां च मूलानि

---

[24] निरुक्तम् १३।१।१३

[25] ईश्वरकृष्णकृतसाङ्ख्यकारिकाव्याख्यानम्

[26] वाचस्पत्यम्

स्मार्त्तग्रन्थेषु मन्वादिभिः कल्पयन्ति। तत्र वेदार्थस्मरणमूलकत्वादेव विधीनां स्मृतित्वम्। तदेवं स्मृत्युक्तविधीनां श्रुत्युक्तमूलानि साक्षान्नोपलभ्यन्ते। यथा मीमांसाधिकरणमालायां "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति विधेः आचार्य- वचनत्वात् लोकवेदमूलत्वात् च अप्रामाण्यमित्यङ्गीकर्तुं न शक्यते। तथा हि मन्त्राणां श्रुतित्वं सर्ववादिसम्मतम्। ब्राह्मणाम्नायभागानां तु श्रुतित्वं मन्वादिभिः स्वीकृतमेवेति स्पष्टम् दृश्यत एव।

**आम्नायः :-**

"श्रुतिस्त्री वेद आम्नायस्त्रयी"[27] इति कोशवाक्यात् श्रुतिः वेदः अम्नायः त्रयी इति एतानि सर्वाणि एकार्थकानि पदानि इति स्पष्टं ज्ञायते। तत्र आम्नायश्च समाम्नायः अभिन्नार्थकौ स्तः। "आम्नायसमाम्नायशब्दौ वेद एव रूढौ" इति नागेशभट्टः तस्य लघुशब्देन्दुशेखरे स्पष्टम् दर्शितवान्। एवमेव भगवता जैमिनिमुनिना कृते अद्यप्रचलिते मीमांसादर्शने बहुत्रापि मन्त्रब्राह्मणपरो आम्नायशब्दः दृश्यते- "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्"[28] इति। "उक्तं समाम्नाय इदमर्थम्"[29]

---

[27] अमरकोशः १।६।३

[28] जैमिनीयमीमांसादर्शनम् १।२।१

[29] जैमिनीयमीमांसादर्शनम् १।४।१

इत्यादिकाः द्रष्टव्याः। "स्याद्वाम्नायधर्मित्वा-च्छन्दसि नियमः"[30] इत्येतस्य वाक्यस्य व्याख्यानावसरे उव्वटेन चोक्तम्- "आम्नायो वेदः" ; "ब्राह्मणं विध्यर्थवादरूपम्। मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवता-स्मारकः" – इति पर्यन्तम् पूर्वोक्तानां जैमिनीयवाक्यानां तस्य सम्मतिं दर्शयति। तथा च अथर्ववेदीये कौशिकसूत्रे- "आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च" इति स्पष्टमुक्तं दृश्यते। अत एव आम्नायशब्दः वेदशब्दस्य पर्यायशब्दो वर्तत इति न कोऽपि सन्दिहानः।

यास्कीयेऽपि निरुक्ते मन्त्रब्राह्मणयोरुभयोरपि आम्नायत्वं स्वीकृतं दृश्यते। तथा हि- "अथाप्यनुपपन्नार्था भवन्ति- 'ओषधे त्रायस्वैनम्'[31] ; 'स्वधिते मैनं हिंसीः'[32] ; इत्याह हिंसन्"[33]- इत्याशङ्क्य समाहितं तत उत्तरम्- "यतो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयते"[34] इति। तेनात्र मन्त्राणां आम्नायत्वेन ग्रहणं दृष्टम्। अन्यत्र तु "एषां लोकानां रोहेण सवनानां रोह आम्नातः"[35]इत्यत्र उत्तरमेतत्सिद्धान्ते "यतो

---

30 वाजसनेयिप्रातिशाख्यसूत्राणि १।४

31 यजुर्वेदवाजसनेयिसंहिता ४।१

32 यजुर्वेदवाजसनेयिसंहिता ६।१५

33 निरुक्तम् १।५।१

34 निरुक्तम् १।५।२

35 निरुक्तम् १।६।४

एतद्रोहात्प्रत्यवरोह-श्चिकीर्षित इति आम्नायवचनादेतद्भवति"[36] अस्मात्तु वाक्यात् ब्राह्मणानामाम्नायत्वेन ग्रहणं दृश्यते। अत एव निरुक्तकारमते मन्त्रब्राह्मणयोरुभयोः आम्नायत्वं सिद्धम् इति सुव्यक्तं भवति।

निरुक्तकृता यास्केनैव आदौ मन्त्राणामाम्नायत्वं मत्वा सङ्गृहीतस्य निघण्टोश्च समाम्नायत्वमुक्तम्- "समाम्नायः समाम्नातः स व्याख्यातव्यः"[37] इति। अत एव निरुक्तविवृत्तिकारेण दुर्गाचार्येण भूमिकायामुक्तम्- "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता सैषा छन्दोऽवभूता छन्दोधर्मिण्येव यथायथापन्नास्ता गौर्गोर्धर्म्मा" इति। तेनात्र निघण्टोः समाम्नायत्वं सर्वमतसम्मतमिति ज्ञायते।

वेदाङ्गानामपि आम्नायत्वं निरुक्तकारस्य सम्मतमेव। तत एवोक्तम् "समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"[38] इति। अस्मिन् निरुक्ते मन्त्राणां मन्त्रेभ्यः सङ्गृहीतानां नैघण्टुकपदानां वेदानां (मन्त्रातिरिक्तानां) वेदानामङ्गानाञ्च आम्नायत्वं यास्केन निरूपितम्।

**त्रयी :-**

अमरसिंहोक्तेषु वेदनामसु त्रयी इत्यपि दृश्यते। मन्त्राणां स्वरूपे त्रैविध्यमेव त्रयीत्वम्। पुरा पद्यस्वरूपस्य ऋगिति, गद्यस्वरूपस्य यजुरिति,

---

[36] निरुक्तम् ७।७।१

[37] निरुक्तम् १।१।१

[38] निरुक्तम् १।६।५

गानस्वरूस्य साम इत्येव त्रयी। गद्यपद्यगानात्मिकं स्वरूपमतिरिच्य न कोऽपि वेदस्य अपरस्वरूपः वर्तत इति त्रयी इत्यस्य विषयस्य उद्देशः। न केवलं त्रयी समाम्नायः वेद इत्येव तस्य नाम्नः। अपि तु-

**श्रुतिस्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः।**

**तेषामृक्सामयजुषी इति वेदस्त्रयस्त्रयी॥**[39] इति।

एवमेव इमानि वाक्यान्यपि- "तेषामृग्यत्रार्थवशेन पदव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः।"[40] इत्यस्मादपि स्वरूपत्रयी एव वेदः न तेषामतिरिक्तः स्वरूपः वर्तते। माधवेनैव तस्याम्नायविस्तरे स्पष्टीकृतं यत्- "एवञ्च त्रयी नाम त्रिविधरचनामयी आप्तवाणी सैव वेदः सैव आम्नायः सैव श्रुतिः" इत्यपि च दृश्यते। अन्येषां तु त्रयी इत्यस्य ऋग्यजुस्सामा एव वेदाः। अन्यस्तु न वेद इति अनर्थं कल्पयन्ति। अत्र वेदग्रन्थेषु वा आचार्यैः प्रयुङ्क्षेषु वाक्येषु यत्र त्रयी इति दृश्यते स च शब्दः केवलस्य वेदस्य त्रैविध्यविभागं बोधयति। न तु अन्यथा। यदि कोऽपि ऋगादित्रैविध्यं वेद इत्यालोच्यते तर्हि तच्च तस्य वेददूषकत्वं पापो भवति। तस्मात्तु नरकप्राप्तिः जायत एव।

---

[39] अमरकोशः १।६।३

[40] मीमांसादर्शनम् २।१।३२-३४

अस्य वेदस्य अनन्तत्वं पूर्वमेवोक्तम्। परन्तु वेदस्य मन्त्राणाम् अर्थज्ञानाय निरुक्तम् अध्येतव्यम्। निरुक्तं ग्रन्थः वेदमन्त्राणाम् अर्थप्रतिपादकः। परं तस्य निरुक्तस्य प्रणेता कः ?इति प्रश्ने उच्यते-

## निरुक्तस्य कः प्रणेता?

अनतिप्राचीनैः आचार्यैः मधुसूदनसरस्वतीति पण्डितोत्तमैः कृते प्रस्थानभेदनामग्रन्थे इदं वाक्यं दृश्यते- "भगवता यास्केन 'समाम्नायः समाम्नातः स व्याख्यातव्यः'- इत्यादि वाक्यैः निरुक्तमारचितम्।" इति। तत्रैव अन्यत्र दृश्यते- "निघण्टुसंज्ञाको पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः" इति। परन्तु इदं असत्यमेवेति सर्वे निरुक्तज्ञाः प्रकटयन्ति। परन्तु अद्ययुगीयेन कृतस्य ग्रन्थस्य कथं वा समाम्नायत्वं वक्तुं शक्यते? इत्यस्य सम्भव एवेति भ्रमवादिनः तेषाम् उत्तरं कल्पयन्ति। सायणाचार्यस्तु ऋग्भाष्यभूमिकायां- "गौः ग्मा ज्मा क्ष्मा क्ष्मेत्यारभ्य ; पदानां समाम्नायः समाम्नातः" इति पर्यन्तम्। एवञ्च "तद्व्याख्यानञ्च समाम्नायः समाम्नातः" इत्यारभ्य ; "यास्को निर्ममे" – इति पर्यन्तञ्च तदुत्तरं दत्तवान्। अत एव सायणमते समाम्नायत्वेन निघण्टोः अनादित्वम् निरुक्तस्य यास्कीयत्वं निघण्टुभाष्यत्वं च प्रतिपन्नम्।

**यास्कस्यैव निरुक्तम् :-**

तथैव निघण्टुटीकायाः भूमिकायां देवराजेन- "भगवता यास्केन समाम्नायं नैघण्टुकनैगमदैवतकाण्डरूपेण त्रिविधं गवादिदेवपत्न्यन्तं

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

निर्ब्रुवता" इत्युच्यते। अस्मात् वाक्यात् ज्ञायते अत्रापि यास्ककृतं निरुक्तं भाष्यरूपेणैव प्रतिभाति न तु समाम्नायत्वेन इति। सर्ववेदभाष्यकार एव निघण्टुनिरुक्तयोः एकान्यतमत्व-वादविषये स्वयं तस्य मतं प्रतिपादयति यत्- निघण्टुग्रन्थस्य समाम्नायत्वं किन्तु तस्य अनादित्वं सिद्ध्यति इति। निरुक्तस्य स्वयम्प्रतिपादकत्वेन समम्नायस्य निघण्टोः तस्य भाष्यत्वं सिध्यत्येव। अयमेव विषयः सायणः तस्य ऋग्भाष्यभूमिकायां तस्यैव शैल्याम् अबोधयत्। अत एव अस्यापि मते निघण्टोः समाम्नायत्वेनानादित्वम् ; निरुक्तस्य यास्कीयत्वं चेति स्पष्टं ज्ञायते।

एक एव निरुक्तवृत्तिकारः दुर्गाचार्यस्तु स्वग्रन्थभूमिकायां केनायं ग्रन्थो रचित इति नोल्लिखितवान्। परं प्रथमखण्डव्याख्यानावसरे तु- "आचार्योऽयं यास्को निरुक्तकारः" इत्युक्तवान्। तस्मिन्नेव ग्रन्थे अन्यत्र निघण्टुकर्तृनिर्णयविषये भूमिकायामेवोक्तं यत्- "सा (पञ्चाध्यायी निघण्टुः) च पुनरियं साक्षात्कृतधर्म्मभ्यो महर्षिभ्यः उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यम् उपेक्ष्य तदनुजिघृक्षया वाच्यार्थसामर्थ्यात् अभिधेयानुन्नीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता" इति वाक्यम्। एतत्सर्वं निरुक्तोक्तमेव। परन्तु वृत्तिरूपत्वात् गौरवं दृश्यते। अस्य मते देवराजोऽपि निघण्टुग्रन्थस्य आम्नायत्वं प्रतिपादयति। अत एव दुर्गाचार्यस्यापि मते निघण्टोः आम्नायत्वेनानादित्वं निरुक्तस्य यास्कीयत्वं
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

चेति सुव्यक्तम् भवति। तथैव महाभारते शिपिविष्टशब्दनिर्वचनप्रसङ्गे[41] एते श्लोकाः दृश्यन्ते। एतैरेव बुध्यते यत् निरुक्तम् यास्कीयमिति। यथा-

**शीपिविष्टेति चाख्यायां हीनरोमा च यो भवेत्।**
**तेनाविष्टं तु यत्किञ्चित् शिपिविष्टेति च स्मृतः॥**

**यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान्।**
**शिपिविष्ट इति ह्यस्मात् गुह्यनामधरो ह्यहम्॥**

**स्तुत्वा मां शिपिविष्टेति यास्को ऋषिरुदारधीः।**
**मत्प्रसादादधोनष्टं निरुक्तमभिजग्मिवान्॥** इति।

निरुक्ते[42] शिपिविष्टशब्दस्य द्विविधनिर्वचनम् दृश्यते। तत्रैव महाभारते[43] किञ्चिदुत्तरेऽपि निघण्टुकर्तृनाम च प्रकटितम् द्रष्टुं शक्यते। तथा हि-

**वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।**
**निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्॥**

**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।**
**तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः॥** इति।

---

[41] महाभारतम् १२।३४२।६९-७१

[42] निरुक्तम् ५।२।२-४

[43] महाभारतम् १२।३४२।८६-८७

निघण्टौ[44] वृषाकपिरिति पदपाठः वर्तते द्रष्टुं शक्यते च। एतान्येव मतान्यनुसृत्य अद्ययुगीयाचार्यस्य मधुसूदनसरस्वतेः निघण्टुनिरुक्तयोरेक-कर्तृत्वमतं खण्डनीयम्। यास्कस्तु वेदाङ्गसमकालीनः। परं निघण्टुग्रन्थः ब्राह्मणग्रन्थैरपि प्रागेवोद्धृतः कश्यपेन प्रजापतिना समाम्नातश्च। तेन निघण्टुग्रन्थस्य काश्यपीयत्वं निरुक्तस्य यास्कीयत्वञ्च सिद्ध्यत्येव।

तथा च यास्केन कल्पोक्तवचनमेकं दर्शितम्- "साक्षात्कृतधार्माण ऋषयो बभूवुः (मन्त्रद्रष्टारः); तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्यः (शाखाप्रवक्तृभ्यः) उपदेशेन मन्त्रान् सम्प्रादुः; उपदेशाय ग्लायन्तोऽवरे (निघण्टुब्राह्मण-वेदाङ्गकाराः) बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः; वेदञ्च (ब्राह्मणञ्च) वेदाङ्गानि च"[45] इति। एतस्माच्च वचनात् समासत इमानि पञ्च ज्ञायन्ते।

१. मन्त्राणामुत्पत्तिकालः कस्मिन् ग्रन्थेऽपि अनिर्णीत एव।

२. पूर्वं मन्त्रा विकीर्णा एव स्थिताः। ततो ग्रन्थीभूतानामेव मन्त्राणाम् अध्ययना-ध्यापनाभ्याञ्च शाखाः समुद्भूताः। ततः सर्वशाखागतानां नैघण्टुकादिपदानां सुखबोधार्थं निघण्टुनामको ग्रन्थः समाम्नातः। ततः मन्त्रार्थज्ञाने कृतकृत्यतामनालोच्य मन्त्रेषु क्लिष्टपदानां

---

44 कश्यपनिघण्टुः ५।६।१३

45 निरुक्तम् १।६।५

तात्पर्यवेदनाय ब्राह्मणग्रन्थाः समाम्नाताः। तेभ्योऽपि ब्राह्मणग्रन्थेभ्य अपर्याप्तत्वात् निघण्टुग्रन्थः निरुक्तादीन्यङ्गानि च समाम्नातानि।

३. उपरिवाक्योक्तरीत्या यथा श्रुतिरित्यनेन मन्त्राः वेदशब्देन मन्त्रातिरिक्तानां ब्राह्मणानां च बोधो जायते। तथा च वेदाङ्गशब्दस्य पृथक् श्रवणात् ब्राह्मणेषु वेदाङ्गेतरवाक्यानां ग्रहणम् वर्तत इति ज्ञायते।

४. निरुक्तस्य प्रथमवेदाङ्गत्वं लभ्यते। किन्तु षण्णां च निरुक्तस्य बीज-रूपत्वात्।

५. यथा मन्त्रोक्तानां क्लिष्टपदानाम् अर्थसौकर्याय निघण्टोः निरुक्तादीनां च वेदाङ्गानां स्वीकृतिः दृश्यते। तथैव ब्राह्मणानाञ्च "वेद इति प्रसिद्धानां ब्राह्मणानाञ्च" इत्यनेन कालमनुसृत्यैव मन्त्रसमत्वं जातमिति यावत्।

उपर्युक्तो विषयः निरुक्तकर्तुः चर्चाविषये प्रासङ्गिक एव। अथैवं निरुक्तस्य कर्ता यास्क एवेति सर्वथा प्राप्तविषय एव। परं कोऽयं यास्कः? स तु यास्कः ऋषिर्वा आचार्यो वा? इति प्रस्तावना क्रियते।

## कोऽयं यास्कः?

कोऽयं यास्क इत्ययं प्रश्नः। यास्को एक एव वा न त्वन्योऽपि वर्तते वेति सन्देहसम्बद्धः। कस्याप्याचार्यस्य ग्रन्थप्रस्तावनायां भूमिकायां ग्रन्थे वा यत्र कुत्रापि अस्य यास्कस्य परिचयः लभ्यते वेति पश्यामः।

शतपथब्राह्मणे[46] उभयत्र एको हि यास्कः श्रूयते। तथा हि- "अथ वंशः। तदिदं वयं (शतपथब्राह्मणप्रवक्तारः) शौर्पणाय्यात्, शौर्पणाय्यो गोतमात्" इत्यारभ्य "भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च" इति। "तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यो बोद्धव्यः" इतीदं व्याख्यानं द्विवेदगङ्गेन कृतम्। अयं च यास्कः न निरुक्तकारः। किन्त्वयं यास्कः मधुविद्यासम्प्रवक्ता निरुक्तयास्कादपि षड्विंशपुरुषादप्यधिको प्राचीन इति तत्रैव कालविषयः प्रस्तूयते। परन्तु अस्य निरुक्तकारस्य यास्कस्य कालः पाणिनेरपि प्राचीनत्वनिर्णयात् तस्य अद्ययुगीयत्वं कल्पितव्यम्। अस्मादेव वेदाङ्गानां ब्राह्मणेभ्योऽनन्तरकालिकत्वं सिद्ध्यति।

पिङ्गलोक्ते छन्दोग्रन्थेऽपि एकत्र यास्कः स्मर्यते "उरो बृहती यास्कस्य"[47]- इति। अयमपि यास्को न निरुक्तकारः। किन्तु यास्कस्य निरुक्ते न कुत्रापि उरबृहत्योः व्याख्या न लभ्यते। यास्कः पिङ्गलादपि प्राचीन एव। परन्तु अत्र उल्लिखितः यास्कनामकः कश्चिच्छन्दस्सूत्रकारः भवितुमर्हति। अत्रोक्तस्य यास्कस्य छन्दस्सूत्रकर्तृकत्वम् उव्वटेन बह्वृक्प्रातिशाख्यस्य तृतीयवृत्तौ शास्त्रप्रयोजनश्लोक-व्याख्यानसमये निरूपितम्- "तथा सर्वैः छन्दोविचित्यादिभिः पिङ्गल-यास्क-सैतवप्रभृतिभिः यत्सामान्येनोक्तं लक्षणम्" इति। न केवलं निरुक्ते अपि तु तस्य ग्रन्थस्य

---

[46] शतपथब्राह्मणम् १४।५।५।२०-२१ ; १४।७।३।२६-२७

[47] पिङ्गलछन्दः ५।१०

टीकाभाष्यकारादयो न कुत्रापि यास्कस्य छन्दःकर्तृत्वविषयं प्रस्तुतवन्तः। परन्तु अयं यास्कः निश्चयेन न छन्दःकार इति वक्तुं न शक्यते। यदि कुत्रापि उल्लेखः वर्तते चेत् तर्हि अयं छन्दस्कृत् इति वक्तुं शक्यते। तत्पर्यन्तञ्च अयं यास्को न छन्दःकार इति मन्तव्यमेव।

शौनकीयप्रातिशाख्यग्रन्थे एकत्र यास्कस्य नाम श्रूयते- "न दाशतय्येकपरा काचिदस्तीति वैयास्कः। अन्यत्र वैमद्याः सैकादशिनीमुखतो विराट्"[48] इति। अत्र वैयास्क इत्यस्य वै पूर्वको यास्को वा वैयास्को वा इति सन्देहो जायते। एवमेव उव्वटः अस्य वाक्यस्य व्याख्यानावसरे- "दाशतये भवा दाशतयी; काचित् एकपदा नास्तीति वैयास्क आचार्यो मन्यते" इति पाठयति। व्याख्याकारस्य अस्मात् वाक्यात् अयं वैयास्क इति स्पष्टम् ज्ञायते। अस्तु यदि तत्र यास्क एव इत्यङ्गीक्रियते तर्हि तस्य निरुक्तमिति ग्रन्थः नात्र कुत्रापि उल्लिखितः दृश्यते। न केवलं निरुक्तस्य उल्लेखः अपि तु निरुक्ते न कुत्रापि ऋग्व्यतिरिक्ता वैमद्या वा दाशतयी काचिदेकपदा इति वा तदर्थबोधको वा सम्बद्धः ध्वनितं दृश्यते। यदि शौनकीयप्रातिशाख्यायां लिपिविषयकः दोष इति कल्पयित्वा अयमेव यास्को निरुक्तकार इति स्वीकारे च शौनकस्य अनृतभाषित्वं उन्मत्तप्रलापित्वं वा प्रकारान्तरेण कल्पनीयम्। तस्मादपि यास्कान्तरकल्पनमेव सुहृत् इति।

---

48 शौनकीयप्रातिशाख्यम् १७।२५

तथा च पाणिनेरपि अष्टाध्याय्यां सूत्रेषु वा नायं निरुक्तकारो यास्कः परिचितः। तत्रैवैकम् सूत्रम् वर्तते- "यस्कादिभ्यो गोत्रे"[49] इति। अस्मिन् सूत्रे न निरुक्तकारस्य यास्कस्य प्रस्तावनम् वर्तते। तत्र तु सूत्रे यस्को विश्रुतः न तु यास्कः। यस्को न निरुक्तकारयास्कः। अपि तु यस्कगोत्रीय इति। यस्कगोत्रोद्भवाः अद्यतनीयाः सर्वे यास्का एव। एतेषां सर्वेषामपि निरुक्तकर्तृत्वं कल्पयितुं न शक्यते। एवं सूत्रे 'गोत्रे' इत्युल्लेखात् यस्क इत्यस्य ज्ञानं पणिनेः स्थितमेवेति स्पष्टम्। "अपत्यं पौत्रप्रभृतिगोत्रम्"[50] इत्यनेन सूत्रेण गोत्रे अपत्यत्वविधिः वर्तते। अर्थात् यस्कस्य वंशजाः यस्कात् तृतीयपुरुषतः अद्यतनीयान्ताः सर्वेऽपि यस्कगोत्रीया एव। एते सर्वेऽपि यास्कनाम्ना व्यवहरणीयाः इति पूर्वोक्तस्य "यस्कादिभ्यो गोत्रे" इतिपाणिनेः सुमतम्। तस्य सूत्रस्य वृत्तौ भट्टोजिदीक्षिताचार्यः "एभ्योऽपत्यप्रत्ययस्य लुक् स्यात् बहुत्वे कृते न तु स्त्रियाम्" इति स्पष्टं दत्तवान्। परन्तु अत्र सूत्रे यस्कानन्तरापत्यस्य यास्कस्यैव प्रस्तुतिः वर्तते खल्वित्यस्य समाधानद्वयं वर्तते। तथा हि अत्र प्रस्तुतिः यास्कस्यैव भवेत्। परन्तु तत्र तस्य निरुक्तकर्तृत्वादर्शनात् इति प्रथमः। अत्र सूत्रे केवलयस्कगोत्रस्यैव विषयः दृश्यते न तु निरुक्तकारस्य यास्कस्येति

---

[49] अष्टाध्यायी २।४।६३

[50] अष्टाध्यायी ४।१।१६२

द्वितीयः। किमर्थं न यास्क इति चेत्- "शिवादिभ्योऽण्"[51] इत्यनेन शिवादिगणजेषु अण् विधीयते। तत्रापि गणे यस्क इत्येव पठितः। यस्कस्य अपत्येऽर्थे अणि यास्क इति सिद्ध्यतीति अत्रोद्देशः। पाणिनेः अष्टाध्याय्याः ग्रन्थस्य वृत्तिकारः भाट्टोजिदीक्षितः "गोत्रे इति निवृत्तम् शिवस्यापत्यं शैवः। गाङ्गः" इति स्पष्टम् दर्शितवान्। नागेशोऽपि "निवृत्तमितीदं वृत्त्यनुरोधेन ; यूनि लुक् सूत्रभाष्ये गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति ध्वनितत्वात्। तत्र भाष्ये" इत्यादि। "शास्त्रीयगोत्रञ्च युवत्वानक्रान्तपौत्रप्रभृत्यपत्यरूपम्" इति। "लौकिकञ्च प्रवराध्यायप्रसिद्धम् ; लोके तत्रैव गोत्रव्यवहारात्" इति च द्विविधं गोत्रलक्षणम्। तदपीह पर्यालोच्यम्।

अत एव च "वान्यस्मिन्"[52] इति सूत्रस्य भाष्यव्याख्यानावसरे कैयट एवमाह- "यस्कस्यापत्यं गोत्रमत शिवाद्यण्" इति। तथा हि अयं यास्कः यस्कगोत्रीयोऽपि कथं वा पाणिनेः परिचित इति वक्तुं शक्यते?

अतः यास्कः सर्वत्राप्यपरिचित एव दृश्यते। तेनात्र पाणिनिसूत्रेषु यस्कगोत्रापत्यत्वात् यास्क इति विधिः दृश्यते। तेन वयं यस्कगोत्रोत्पन्नानां तेषामेव एक यास्कः निरुक्तकार इति मन्यामहे। परमन्यत्र यास्क एवास्य निरुक्तस्य कर्ता इति ज्ञायते तच्च महाभारते। पूर्वोच्चरितेषु महाभारतश्लोकेषु

---

[51] अष्टाध्यायी ४।१।११२

[52] अष्टाध्यायी ४।१।१६५

यास्कस्य निर्वचनप्रकारपरिचयः जातः। आश्वलायनश्रौतसूत्रेषु[53] अन्त्ये दशम्यादिषु कण्डिकासु प्रवरनिरूपणाध्यायेऽपि यस्कस्यैव न तु यास्कस्य स्मरणं दृश्यते।

निरुक्तग्रन्थस्य परिशिष्टे दृश्यते यत्- "नमः पारस्कराय नमो यास्काय" इति पाठः। तत्र पारस्कराय इति यास्कपरिचयायैवोक्तमिति स्पष्टं ज्ञायते। पतञ्जले महाभाष्ये "पारस्करो देशः" इति निर्णयत्वात् यास्कः पारस्करदेशीय इति कल्पनीयः। पारस्करो देश इति "पारस्करप्रभृतीनि च संज्ञायाम्"[54] इत्यनेन ज्ञायते यत् पारस्करो देशः ; "कारस्करो वृक्षः ; रथस्या नदी ; किष्किन्धा गुहा किष्कुः" इति तथा चायं यास्कः सर्वत्राप्यपरिचितः। अतः महाभारतमनुसृत्यैव तमङ्गीकर्तव्यम्। तथा चायं यास्कः यस्कगोत्रीयः पारस्करदेशीयः चेत्यङ्गीकर्तव्यः।

## यास्कस्य ऋषित्वम्

अथेदानीम् इदमपि विचार्यमस्ति यत् यास्कस्य ऋषित्वमस्ति वा नास्ति वेति। ऋषित्वं तु त्रिविधमनुभूयते। तच्च मुख्यर्षित्वम्, आतिदेशिकम्, तार्तीयीकमिति। तदेतत् त्रिविधानामन्यतमम् अस्यास्तीति चेत् किं विधञ्च तदिति विचार्यः विषयः।

---

[53] आश्वलायनश्रौतसूत्राणि ६।१०।१०

[54] अष्टाध्यायी ६।१।१५७

## मुख्यर्षित्वम् :-

यास्कः स्वयमेव मुख्यर्षिलक्षणमाह- "ऋषिर्दर्शनात्। स्तोमान् ददर्शेत्यौपमन्यवः। तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भू अभ्यनार्षत् तदृषीणामृषित्वमिति विज्ञायते"[55] इति। अत्रोक्तं तद्यदेनानित्यादिकं ब्राह्मणमतमेवेह प्रमाणत्वेन औपमन्यस्तम्। तदेवोक्तं तत्रैव वृत्तिकृता दुर्गाचार्येण "ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति 'तद्यदेनांस्तपस्यमानान्' इत्यादि। 'तत्' एतदुच्यते यत्कृतमृषीणामृषित्वम्" इति। निरुक्ते अपरत्रापि "ऋषिः कुत्सो भवति ; कर्त्ता स्तोमानाम्- इत्यौपमन्यवः"[56] इति च यास्केनैव तन्निदर्शनं प्रदर्शितम्। किञ्च तत्पूर्वतनानामपि तथैव व्यवहार इति तेनैव प्रदर्शितम्। तथा ह्यत्र "साक्षात्कृतधर्माण ऋषयो बभूवुः" इत्याद्युक्तमालोचनीयम्। तत्रैव "ऋषन्ति अमुष्मात् कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैतल्लक्षणं फलविपरिणामो भवतीति ऋषयः" इति दुर्गाचार्येण ऋषिपदनिर्वचनं कृतम्। एवञ्च मन्त्रद्रष्टृणामेव मुख्यमृषित्वं साध्यम्। तथा च आदिकल्पजानाम् अतिप्राचीनतमानां वसिष्ठवाम-देवादीनामेव तादृगृषित्वं स्वीकार्यमिति प्रतीयत एव।

---

[55] निरुक्तम् २।३।२

[56] निरुक्तम् ३।२।५

## द्रष्टृत्वचिन्तनम् :-

प्रायः कर्तृत्वं द्रष्टृत्वञ्चाभिन्नमेवेति केचन वदन्ति। अपि च तत्र अतीवप्राचीनानाम् अज्ञेयकालिकानामेव कृते दृष्टमिति व्यवहारः नान्यत्र विशेषः। तदिमानि "दृष्टं साम"[57] इत्यादिपाणिनिसूत्रीयाणि "वसिष्ठानि दृष्टं वासिष्ठं साम"- इत्यादीनि वृत्तिकृद्भिरुदाहरणानि दत्तानि। तथैव "य अङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् ; स गृत्समदो द्वितीयं मण्डलमपश्यत्" इत्येवमादीनि अनुक्रमणीवचनादीनि च। किञ्च निरुक्तकारोऽप्येतदाह- "ऋषिरक्षपरिद्यूनस्यैतदार्षम्"[58] इति। "मुख्यानां जालमापन्नानामेतदार्षम्"[59] इति च।

तथा चैतरेयब्राह्मणे- "देवा ह वै सर्वचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्प ऋषिमन्त्रकृत्"[60] इति। निरुक्तेऽप्येवं दृष्टान्तो न दुर्लभः। तथा हि- "इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः प्रसङ्ख्यायाह सुवास्त्वा अधि तुग्वनि"[61] इति च। अत्र यास्कस्य पूर्वप्रवादा अपि सङ्गृहीतास्सन्ति। तत्राप्यस्त्वेव मन्त्राणां कृतकत्वप्रसिद्धिः। तथा हि- "तत्रेतिहासमाचक्षते-- विश्वामित्र ऋषिः सुदासः

---

57 अष्टाध्यायी ४।२।७

58 निरुक्तम् ६।१।८

59 निरुक्तम् ६।५।४

60 ऐतरेयब्राह्मणम् ६।१।१

61 निरुक्तम् ४।२।७

पैजवनस्य पुरोहितो बभूव" इत्यारभ्य "स वित्तं गृहीत्वा विपाड्छुतुद्र्योः सम्भेदमाययौ आनययुरितरे। स विश्वामित्रो नदीं तुष्टाव गाधा भवतेत्यपि, द्विवदपि बहुवत्"[62] इति। तथा "धातोः कर्मणः समानकर्तृकादिच्छायां वा"[63] इति पाणिनिसूत्रस्य व्याख्यानावसरे पतञ्जलिनापि- "ऋषिः पठति- 'श्रृणोत ग्रवाणः' इति" इति भाषितम्। स्तवनपठनादिकञ्च कृतिविशेष एव। तदेवं मन्त्रकर्तृत्वं वस्तुतोऽभिन्नमिति स्पष्टम् इति केचन वेदव्यतिरिक्ताः वदन्ति।

ननु मन्त्राणां कर्तृत्वं सिध्यति। किन्तु वेदे लोकेऽपि च वेदराशेः अपौरुषेयत्वमेव रूढिः। ऋषिर्दर्शनात् इति यास्कवाक्योऽपि मन्त्राणां द्रष्टृत्वे तेषां ऋषित्वं सिध्यतीति एव प्रतिपाद्यते। अत्रान्तरे तु कथं वा मन्त्राणां कर्तृत्वकल्पनम्? परम्परागतस्य वेदस्य कर्तृत्वकल्पने तदुन्मत्तप्रलापित्वमेवेति कल्पयेत्।

तदित्थं मन्त्रद्रष्टृत्वं तु ऋषीणामेव। तथा ऋषित्वमपि मन्त्रद्रष्टृत्वानुगतमेवेत्यपि स्थिरम्। एवं ऋषित्वमन्त्रद्रष्टृत्वयोः सामानाधिकरण्यं सर्वसम्मतमिति मन्त्रद्रष्टृत्वमूलकमेव मुख्यं ऋषित्वमिति च न कोऽपि संशयः। अथ कस्यामपि संहितायां यास्कदृष्ट एकोऽपि मन्त्रो न दृश्यत एव। न च आद्ययुगीयस्यास्य यास्कस्य मन्त्रद्रष्टृत्वम् असम्भव एव। तदेवमस्य यास्कस्य मन्त्रद्रष्टृत्वाभावात् मुख्यर्षित्वं असिद्धमेव।

---

[62] निरुक्तम् २।७।२

[63] अष्टाध्यायी ३।१।७

## आतिदेषिकर्षित्वम् :-

यास्कपूर्वतनैः ब्राह्मणप्रवक्तृणां ताण्ड्यादीनां मन्त्रद्रष्टृत्वाभावेऽपि मन्त्रद्रष्टृत्वतुल्यतया आतिदेशिकर्षित्वं तु स्वीकृतमेव। तथा हि- "साक्षात्कृतधर्माण ऋषयो बभूवुः" इत्यारभ्य "उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"[64] इत्यत्र अवरे इति पदात् ऋषय एव गम्यन्ते यत्- निघण्टुकारस्य, ब्राह्मणपरपर्यायानां प्रवक्तृणाम्, वेदाङ्गानाञ्च कर्तृणामपि ऋषित्वव्यवहार आर्यसम्मत एवेति तत्र ध्वनितम्। यास्कस्य निघण्टुकर्तृत्वं नैवेति पूर्वमेव अस्माभिः प्रतिपादितम्। तस्य ब्राह्मणप्रवक्तृत्वमपि नास्त्येव। वेदाङ्गकर्तृत्वं तु अस्त्येव। यास्कस्य तु आतिदेशिकर्षित्वमपि नोपयुज्यत इति स्पष्टम्। अर्थात् यास्कस्य नैव मन्त्रद्रष्टृत्वं न वा मन्त्रद्रष्टृत्वतुल्यत्वं सिद्ध्यति।

अथ पूर्वप्रदर्शिते शतपथब्राह्मणवचने[65] अस्य पूर्वपुरुषस्य मधुविद्याप्रवक्तृत्वं व्यक्तमेव। मधुविद्या च ब्राह्मणान्तर्गतैव। तथा च तादृशस्य ब्राह्मणप्रवक्तुः वंशधरत्वेनैव अस्यापि यास्कस्य मुख्यर्षित्वं आपाद्यमेवेत्यपि वक्तुं न योग्यम्। लोकवेदव्यवहारविरोधत्वमेवास्य कारणम्। लोके वेदे च ऋषिवंशप्रभवत्वेनैव ऋषित्वं क्वचिदपि हि व्यवहृतं न दृश्यते। लोके तावत्- वयं तु कश्यपर्षिवंशप्रभवा एव। परं कः खलु

---

[64] निरुक्तम् १।६।५

[65] यथा – पाददटिप्पणी ४६

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

भारतेऽस्मान् प्रति इमे ऋषय इति व्यवहरन्ति? किं बहुना यदि हि वंशप्रभवत्वेनैव ऋषित्वमाप्यं भवेत्तर्हि अद्यतनीया आचार्याः सर्व एव प्राय ऋषय एवोक्ताः स्युः। सर्वेषामेव कश्यपभरद्वाजवसिष्ठादिवंशीयत्वात् कथं वा सर्वेषां च ऋषित्वप्राप्तिः? न ह्येवं व्यपदेशो क्वापि नैवं व्यवहारो लौकिक अपि दृश्यत इति स्पष्टम् ज्ञायते।वैदिकव्यवहारतश्चाधिगम्यते ऋषिवंशप्रभवत्वेनैव ऋषित्वम् नावाप्यम्। तथा हि-

**अर्चनानाः पुरात्रेयो दाल्भ्येन रथवीतिना।**
**आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः॥**
**रथवीतिसुतां कन्यां ददर्श पितुरन्तिके।**
**ययाचे स्वकुमाराय श्यावाश्वाय च तां सुताम्॥**
**स प्रदानमना भार्यामपृच्छत् किं प्रयच्छसि।**
**इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि॥**
**इतः परं सुता दत्ता नासीदनृषये क्वचित्।**
**तत्तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम्॥**
**श्यावश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः।**
**तत्प्रत्याशान्वितो विप्रस्तपस्तेपे सुदारुणम्॥**
**ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् द्विजः।**
**तरन्तमहिषीः साध्वीं बिभिक्षेऽसौ शशीयसीम्॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

सा तम्प्राप्यान्तिकं पत्युः प्रोवाचागतवानृषिः।
इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय॥

सानुज्ञाता गवां यूथं प्रादादाभरणानि च।
तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम्॥

दत्त्वा च पुरुमीढस्य स्वानुजस्यान्तिकं प्रति।
प्रेरयामास तमृषिं सोऽपि त्वां मानयिष्यति॥

तथेति राज्ञो वचनं निशम्य तद्भार्यया दर्शितसर्वमार्गः
गच्छन् शौनिरर्द्धपथे मरुद्गणान् समानरूपान् स्वदिदृक्षयागतान्।
विलोक्य विप्रः सभयः प्रणम्य कृताञ्जलिः कण्टकिताङ्गसङ्घः
तुष्टावहृष्टान् मरुतो विशिष्टैरर्थैर्वचोभिः प्रियतुष्टचित्तः॥

सम्प्राप्य सर्वं स्वमनीषितं तदा मरुद्गणेभ्यो मुदितात्मवद्यः।
तदाभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः।
पश्चात् पुनर्गृहं गत्वा भूयो लब्ध्वा गवां शतम्॥

दाल्भ्या मन्त्रदृशेराज्ञया चोदितः स्वसुतां ददौ।
पुरुमीढस्तरन्तश्च तद्भार्या च शशीयसि॥

दाल्भ्यो यो रथवीत्याख्यः सप्त ये मरुतां गणाः।
ते तस्मै यद्ददुस्तुष्टास्तत् केष्ठेत्यत्र वर्ण्यते॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

इति शौनकीयबृहद्देवतोक्तं सायणलिखितं पुरावृत्तं 'केष्ठा' इति सूक्तीयोपोद्घातम्। तच्च सूक्तम् एकोनविंशतिऋचात्मकम् ऋक्संहितायाः पञ्चममण्डलीयस्य पञ्चमाध्यायस्य पञ्चमम्। एवञ्च अत्रिवंशप्रभवः अर्चनानाः ; ऋषिरिति प्रसिद्धः ; तथापि तत्पुत्रः श्यावाश्वो न ऋषिशब्द-व्यपदेशभाक् पितृनामकृत इत्यत्र सुव्यक्तमेव। तेनात्र ऋषिवंशप्रभवा न ऋषय इति सर्वत्रापि अयं विषयः स्पष्टं बोधितः।

**तार्तीयीकम् ऋषित्वम् :-**

एवमेव महाभारते एवमुक्तं दृश्यते यत् "यास्को मामृषिरव्यग्रः" इति ; "यास्क ऋषिरुदारधीः" इति च। कथं वा यास्कस्य ऋषित्वमुक्तम् इति प्रश्नः सम्भवत्येव। इमं विषयमुद्दिश्य अत्र ब्रूमः- तत्तु महाभारतस्य कर्तुः स्वस्य यथा ऋषित्वं तथैव पूजनीयत्वस्य सम्बुद्धौ अपरपर्यायकमेव भवति ; तादृशर्षिस्तु अद्यापि वर्तत एव। वस्तुतो मन्त्रद्रष्टृत्वेनैव आदिवसिष्ठादीनां ऋषित्वं स्पष्टम्। तादृशर्षित्वं तु ताण्ड्यादीनां ब्राह्मणप्रवक्तॄणामपि नास्ति। तत् महाभारतरामायणादिकर्तॄणां तु कथा दूरपराहतैव। ब्राह्मणप्रवक्तॄणां तु मन्त्रद्रष्टृतुल्यत्वेन च ऋषित्वं द्वितीयम् आतिदेशिकम् ऋषित्वम्। तदेव महाभाष्ये[66] भगवान् पतञ्जलिराह-

**न तावदनृषिः कश्चित् स्मर्यते कल्पसूक्तकृत्।**
**कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम्॥** इति।

---

[66] महाभाष्यम् १।३।१०

तदेवं द्वितीयमातिदेशिकम् ऋषित्वम् ब्राह्मणभागप्रवक्तृणाम् अनुब्राह्मणप्रवक्तृणां ब्राह्मणान्तर्गतानामेव सिद्ध्यति। प्रायः इदम् ऋषित्वं लुप्तानां कल्पादिवेदाङ्गशास्त्रप्रवक्तृणां न सिद्ध्यति। ईदृशर्षित्वम् अद्यप्रचलितानां महाभारतकारादीनामपि नास्त्येव। अपि तु बहुज्ञत्वात् बहुमानत्वात् "अयं ऋषिः" इति यत्र प्रयुज्यते। तस्य तु ऋषित्वं पूजनीयत्वस्य अपरपर्यायकं तृतीयम्। तादृशर्षित्वं व्यासवाल्मीक्यादीनामेव सम्भवः। तत् तार्त्तीयीकमृषित्वमेव यास्कस्य स्थितमिति मन्यते चेत् तत्रास्माकमसम्मतिः। परं मुख्यमृषित्वं तस्य नासीदेव। द्वितीयर्षित्वमपि न सम्भाव्यते।

अपि च गणपाठे[67] शिवादिषु यस्कपाठदर्शनाच्च इदमपि ज्ञायते यत्- यन्नामतोऽस्य नाम यास्क इति। तस्याप्येतदादिपुरुषस्य ऋषित्वं नास्तीति सति हि तस्य ऋषित्वे ऋष्यणा[68] एव यास्क इति सिद्धौ तत्पाठफलम् आकाशकुसुमायितमेव स्यात्। अत एव "यास्कमुनिः" इति मुग्धबोधादौ "यास्क ऋषिः" इति कुत्रापि तत्र न दृश्यते।

यास्कस्य मुख्यर्षित्वविचारस्तु दूरे आस्ताम्। विकृतिवल्लरीकारः खलु यास्कपूर्वजो व्याडिश्च स्वगुरोः प्रातिशाख्यकारस्यापि शौनकस्य

---

[67] गणपाठः ४।१।११२

[68] गणपाठः ४।१।११४

मुनित्वमेवाह। तत्तु- "न त्वादौ शौनकाचार्यं गुरुम्"[69] इत्यारभ्य "मुनीन्द्रम्" इति पर्यन्तं वाक्यम्। "पुनः किं विशिष्टम्? 'मुनीन्द्रम्' मननशीला मुनयः, तेषु श्रेष्ठम्" इति च तत्र तट्टीकाकारः पाठयति। तथा पाणिनि-कात्यायन-पतञ्जलिनामपि मुनित्वमेव सर्वत्र व्यवहृतं गम्यते ; न क्वापि ऋषित्वम्। तथा हि भट्टोजिदीक्षतः- "मुनित्रयं नमस्कृत्य" इत्येवाह। एवमेव-

**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन।**

**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥**

इत्यत्रापि पतञ्जलेः मुनिप्रवरत्वमेव स्मर्यते। तथा च प्रस्थानभेदकारो मधुसूदनस्तु एवमाह यत्- "तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव प्रकाशितम्। अत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्त्तिकं विरचितम्। तद्वार्त्तिकस्योपरि च भगवता पतञ्जलिना महाभाष्यमारचितम्। तदेतत् त्रिमुनिव्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते" इत्याह। अत्रापि पाणिन्यादीनां त्रयाणां वैयाकरणानामपि मुनित्वमेव प्राप्यते। सर्वेऽपि विषयविश्लेषकाः अस्मद्गुरवश्च न क्वाफि तेषामुल्लेखेषु आचार्येभ्य ऋषित्वं नापि दत्तवन्तः। न केवलं पाणिनेः अपि तु शाकटायनादीनामपि अतिप्राचीनानां वेदाङ्गवैयाकरणानां न कुत्रापि ऋषित्वसम्बोधनं दृश्यते। अपि च सर्वत्र मुनित्वमेव तेषां दृश्यते।

---

[69] विकृतिवल्ली १।२

वेदाङ्गेषु षट्सु यास्तु शिक्षाः तैत्तिरीयादिषु ब्राह्मणेषु अन्तर्गता इति श्रूयन्ते तासामेव ऋषिप्रवक्तृत्वम्। सामवेदीयानि च यानि छन्दोविधानानि अनुब्राह्मणादौ श्रूयन्ते तेषामेव ऋषिप्रवक्तृत्वम्। व्याकरणानि च पदपाठाद्यात्मकानि पुरा स्थितानि। यानि चेदानीं पणिनीयार्कप्रभातः अदृश्यानि। एवमेव इदानीं दृष्टव्यानि शाकटायनीयर्क्तन्त्रादीनामपि ऋषिप्रवक्तृत्वमेवेति ज्ञायते। निरुक्तानि च यानि ब्राह्मणेषु दृश्यन्ते ; अनुब्राह्मणेषु च स्थितानीत्यनुमीयन्ते ; निदानसूत्रेषु चोपलभ्यन्ते ; शाकपूण्यादिकृतान्यासन्निति च यास्कवचनादितोऽवगम्यन्ते तेषामपि ऋषिप्रवक्तृत्वमेव। पैङ्ग्यादीनाम् अतिप्राचीनतमानां कल्पसूत्राणां तु प्रायः ब्राह्मणसमकालिकत्वमेवेति पाणिनिशासनादिभिरवगम्यते। तत्तेषामृषि-प्रवक्तृत्वे तु न हि सन्दिहानः। यतश्च पैङ्ग्यादीनि प्राचीनतमानि कल्पसूत्राणि चिरादेव ब्राह्मणतः पृथगेव प्रोक्तानि। प्रायः तत्समकालिकानि चेति तेषामार्षत्वं निर्विवादमेव। अतः भाष्योद्धृतायां सङ्ग्रहकृतकारिकायां 'न अनृषिः कल्पकृत्' इति कल्पकृतामेव अनृषित्वशङ्का निवारिता। न हि तत्रोक्तं श्रूयते 'न अनृषिः वेदाङ्गकृत्' इति। अत्रास्मात् वाक्यात् केवलकल्पकृतामेव ऋषित्वे प्रामाण्यं दृश्यते। परन्तु तत्र वेदाङ्गकृतां तु ऋषित्वकल्पनम् असमञ्जसमिति तत्रैव दृश्यते। एवं निष्पन्नमेतत्-ब्राह्मणानुब्राह्मणान्तर्गतानां निरुक्तादीनां वेदाङ्गानाम् आतिदेशिकार्षत्व-मस्त्येव। शाकपूण्यादिकृतानाञ्च तथैव स्यात्। परं यास्कीयस्य ग्रन्थस्यार्षत्वं

तु महाभारतादिग्रन्थानाम् उक्तरीत्या तु नैव ऋषित्वं केवलतार्त्तीयीकमेवेति सत्यम्।

व्याडिस्तु मुनिः पाणिनेरपि परज इति उल्लिखितं दृश्यते। तथा हि विकृतिवल्ल्यां पाणिनिपरजस्यापि व्याडेः ऋष्याख्यानं दृश्यते- "व्याडिनैव महर्षिणा"[70] इति। तदपि मन्त्रद्रष्टृत्वाभिप्रायेणैव उक्तम्। तेषां नये तु मन्त्रादिदर्शनयोग्यतैव ऋषित्वे निदानम्। तादृशी योग्यता तु नूतनवेदाङ्गानां तदङ्गानाञ्चापि कर्तॄणां पाणिनि-व्याडि-शौनक-यास्कादीनाम् आसीदेवेति तेषामपि ऋषित्वं मन्तव्यमेवेति विकृतवल्ल्युक्तरीत्या भवेत्। तदपि तार्त्तीयीकमेव ऋषित्वम्। तदपि नात्र विवादः। बह्वृक्प्रातिशाख्यकृत् शौनकोऽपि तार्त्तीयीकम् आर्षत्वमेवाभिप्रेत्य यदुक्तं तदेव पतञ्जलिराह- "कृत्स्नञ्च वेदाङ्गमनिन्द्यमार्षम्"[71] इति। अपि च व्याडेर्मुख्यर्षित्वे तु क्रौड्यादिगणे व्याडिशब्दस्य पाठो वैय्यर्थ्यमेवापद्येत। "क्रौड्यादिभ्यश्च"[72] इति सूत्रस्य ह्यनार्षविषयत्वमेव निर्णयात् तस्य हि "अणिञोरनार्षयोः"[73] इत्येतत्सूत्रीयप्रपञ्चभूतत्वाच्च। अत एव "गोत्रावयवात्"[74] इति सूत्रस्य भाष्ये- "अष्टाशीतिसहस्राण्यूर्द्ध्वरेतसामृषीणां बभूवुः ; तत्रागस्त्याष्टमैः ऋषिभिः

---

[70] विकृतिवल्लरी १।४

[71] पातञ्जलसूत्राणि ३।२।६

[72] अष्टाध्यायी ४।१।८०

[73] अष्टाध्यायी ४।१।७८

[74] अष्टाध्यायी ४।१।७९

प्रजननोऽभ्युपगतः ; तत्र भवतां यदपत्यं तानि गोत्राणि। अतोऽन्ये गोत्रावयवाः। तत्कथं येभ्यः अगुरूपोत्तमेभ्य इष्यते ? सिद्धं तु रौढ्यादिषूपसङ्ख्यानात्। तत्के पुनरौढ्यादयः? ये क्रौड्यादयः"- इत्याह भगवान् पतञ्जलिः। तदेतत्सारमेवाकृष्य सिद्धान्तकौमुद्याम्- "अगुरूपोत्तमार्थोऽनणिजर्थश्चारम्भः" इत्याह ; तेन तत्रार्षार्थश्चेति नोक्तम्। यदि अनृषिरपि कश्चित् व्याडिः स्यात् तर्हि तदपत्यं भवेत् 'व्याड्या' इत्यतोऽत्र क्रौड्यादिगणेऽवश्यं गणपाठकारभाष्यकारादिभिः कश्चन यत्नः कर्त्तव्य एव। न च तथाकृतं दृश्यत एव। अतः व्याडेरपि मुख्यर्षित्वं नास्त्येव ; परं तत्परजस्य यास्कस्य ऋषित्वविचारः किमर्थमिति अलम् विवेचनेन। सङ्ग्रहकारो व्याडिरेव विकृतिवल्लीकारः। स च पाणिनिपरजो यास्कपूर्वजश्चेत्यपि उपरिष्टादिह वयं प्रतिपादयिष्यामः।

आश्वलायनगृह्यसूत्रेऽपि मन्त्रद्रष्टृणामेव गणानां मुख्यर्षित्वमिति तेषां विशेषत उल्लेखो दृश्यते। तथा हि- "अथ ऋषयः ; शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पामान्यः क्षुद्रसूक्ताः महासूक्ता इति"[75] इति। तत्रैव अनन्तरमाचार्यनामान्यपि कानिचित् स्मृतानि दृश्यन्ते- "सुमन्त, जैमिनि, वैशम्पायन, पैल, सूत्रभाष्य-भारत-महाभारत-धर्माचार्या जानन्ति बाहवि, गार्ग्य, गौतम, शाकल्य, बाभ्रव्य, माण्डव्य, माण्डूकेया, गार्गी, वाचक्नवी, वडवा, प्राथितेयी, मुलभा,

[75] आश्वलायनगृह्यसूत्राणि ३।४।२

मैत्रेयी, कहोलं, कौषीतकं, महाकौषीतकं पैङ्ग्यं, महापैङ्ग्यं, सुयज्ञं, साङ्ख्यायनम्, ऐतरेयं, महैतरेयं, शाकलं, बाष्कलं, सुजातवक्त्रम्, औदवाहिं, महौदवाहिं, सौजामिं, शौनकमाश्वलायनं, ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति"[76] इति। इह तु आचार्यनामसु यद्यपि यास्कस्य नाम पाणिन्यादीनाञ्च नाम न दृश्यते। तथपि सूत्रकारत्वेनैव पाराशर्यकणभक्षाक्षचरणपाणिनिप्रभृतीनाम् निघण्टुसमाम्नायभाष्यकारत्वेन यास्कस्य च ग्रहणमिष्टमिति स्वीकार्यम्।

पुरा किञ्चन भारतं नाम अद्यप्रचलितस्य महाभारतस्य बीजमासीत्। तदेव क्रमादङ्कुरितं प्रस्फुटतत्त्वञ्च प्रसिद्धं महाभारतमित्यभूत्। तन्महाभारतमेव प्रवृद्धं पल्लवितं विस्तृतमिदानीन्तनीयमिदं महाभारतं नामेति चेह अस्माकं गुरवो बोधिताः। तत्र ऋषिनामसु गृत्समद इत्येव ग्रहणं सिध्यति। स तु नापि बह्वृक्प्रातिशाख्यकारः अपि तु शाखाविशेषस्य प्रवक्तैव। अत्र शाकलादिसाहचर्यमेव शौनकादीनाम् ऋषित्वे नियामकम्। अत्र आश्वलायनोऽपि न गृह्यादिकृत् ; अपि च शाखाप्रवक्तैव। अत्रापि शाकलादिसाहचर्यमेव नियामकम्। वस्तुतस्तु आश्वलायनीये ऋषित्वस्य अधोऽधः क्रम एव विवक्षितः। तथा च- सुमन्त्वादयश्चत्वारो व्यासशिष्याः समकालिकाः। तत्पूर्वजा व्यासदयः सूत्रकाराः। तत्पूर्वकालिका बाहव्यादयः संहितापाठाध्ययनभेदोपदेशकाः। तत्पूर्वतनाः गार्गीप्रभृतयः

---

[76] आश्वलायनगृह्यसूत्राणि ३।४।४

ब्रह्मवादिन्यः। तत्पूर्वतनाः कहोलादयः ब्राह्मणादिप्रवक्तारः। तत्पूर्वतना एव शाकलादयः शाखाकारा इति अनतिप्राचीनानां विदुषां मतम्।

ततश्च एतेषां अद्ययुगीयानां तार्त्तीयकर्षित्वसम्पन्नानां सुमन्तुप्रभृतीनाम् तत्पूर्वकालिकानाम् अतिदिष्टर्षिभावापन्नानाञ्च बाह्व्यादीनाम् अतिवृद्धाश्वलायनान्तानाम् आचार्यत्वमेव आश्वलायनस्यापि सम्मतम् ; न तु मुख्यर्षित्वमिति स्फुटं ज्ञायते।

अप्येवं सामान्यत अद्ययुगीयानां सुमन्त्वादीनामपि ऋषिलक्षणं न दुर्लभं सम्भाव्यते। तथा चेहैव सूचितं निरुक्ते[77]- "मनुष्या वा ऋषीषूत्क्रामत्सु देवानब्रुवन् ; को न ऋषिर्भविष्यति? इति। तेभ्य एतं तर्कमृषिं प्रायच्छन् ; मन्त्रार्थचिन्ताभ्यूहमभ्यूह्यम्। तस्माद्यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद्भवति" इति। एवञ्च 'अनूचानत्वे सति मन्त्रार्थाभ्यूहनसामर्थ्यवत्वम् ऋषित्वम्' इत्येव सामान्यत ऋषिलक्षणं फलितम्। अनूचान इत्यस्य गुरुमुखाल्लब्धवेद इत्यर्थः फलति। तल्लक्षणादिकं तु मन्वादौ द्रष्टव्यम्। तदत्र निरुक्ते ग्रन्थे यास्केन मन्त्रार्थाभ्यूहनप्रकारस्तु निरुक्ते विहितः दृश्यते- "तपसा पारमीप्सितव्यम्"[78] इत्यादिना ; "शाकपूणिः सङ्कल्पयाञ्चक्रे"[79] इत्यादिनाप्युदाहृतञ्च तदत्र

---

[77] निरुक्तम् १३।१।१६

[78] निरुक्तम् १३।१।१३

[79] निरुक्तम् २।२।४

यास्केन। ईदृशमृषित्वं तु अस्माकमपि कृतब्रह्मचर्य्याणां मन्त्रार्थाभ्यूहन-समर्थानां सम्भवेदेव। तत् किं नाम भगवतः यास्कस्य? इति चेत्-

इत्थं निष्पन्नमेतत्- एतन्निरुक्तकारो यास्कः खलु वस्तुतो मुनिराचार्यश्चेत्येव चिरात् प्रसिद्धः। एवमप्यस्य भगवतः सामान्यत ऋषित्वम् अव्याहतमेव। तत्रापि विशेषतो विचारिते यास्कस्य तार्त्तीयीकं ऋषित्वमिति सिद्धम् ; तस्य च ग्रन्थस्य निरुक्तस्य आर्षत्वं सिद्ध्यतीत्येवं स्पष्टं सिद्ध्यति। तस्य ऋषेस्तु किमर्थं निरुक्ते आसक्तिरिति प्रश्ने-

## कैमर्थिकी यास्कस्य निरुक्तप्रवृत्तिः?

अत्र अप्येकं विषयं प्रस्तूमः। स च- कैमर्थिकी यास्कस्य निरुक्ते प्रवृत्तिः? इति। शास्त्रे तु एकं वाक्यं दृश्यते- "प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्तते" इति। किञ्च-

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।**

**यावत् प्रयोजनं नोक्तं तावत् तत्केन गृह्यते॥** इति।

न केनापीति भावः। नायं विषयः साङ्ख्यकर्तुः सृष्टिविचार इव स्वार्थपरार्थाद्यनुमानैः निर्णीयो विषयः। अस्मिन् विषये किञ्चित् भगवता पतञ्जलिना उक्तं दृश्यते- "नेह कश्चित् परोऽनुग्रहीतव्य इति प्रवर्तते ; सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते। पारलौकिकस्य नो भविष्यति ; इह नः प्रीतो गुरुरध्यापयिष्यतीति। तथा य एते दासाः कर्मकरा नाम ; एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते। भुक्तं चैलञ्च लप्स्यामहे ; परिभाषाश्च न नो भविष्यन्तीति

(परिभाषाः = दण्डनादिकाः)। तथा य एते शिल्पिनो नाम ; एते च स्वभूत्यर्थं प्रवर्तन्ते। वेतनञ्च लप्स्यामहे ; मित्राणि च नो भविष्यन्तीति"[80] इति।

अस्य प्रश्नस्य तु विशेषाशय एवं वर्तते। यत्- यथा च खलु ऋक्तन्त्रव्याकरणस्य ऋग्वेद एव विषयः ; सामतन्त्रव्याकरणस्य सामवेद एव; तथैवास्यापि शास्त्रस्य कश्चिद्वेद एवैको विषयतया निर्दिष्ट उत यथा पाणिनीयं नाम व्याकरणं लौकिकानां सर्ववेदगतानां च सर्वविधसाधुशब्दानाम् अविशेषेण व्युत्पादनाय प्रवृत्तम् ; तथैवेदमपि? इति। अत्र ब्रूमः-- न इदं ऋक्तन्त्रादिवत् एकवेदविषयकम् ; किञ्च इह सर्ववेदीयानामेव निगमानां दर्शनात्। नापि पाणिनीयमिवेदं लोकवेदयोरविशेषेण शासनम्। किन्तु वेदगतानां क्लिष्टानां लौकिकानां पदानां निर्वचनकरणत्वात्। ततोऽयं ग्रन्थः तृतीयश्रेणीकः सर्ववेदमन्त्रव्याख्यामार्गबोधनायैव प्रणीतः। अत एव यास्कः स्वयमेवाह- "अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थमप्रतीयतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च"[81] इति।

अपरञ्चास्य विशेषतः समालोचनया इदमपि लक्ष्यते- यथा मन्त्राणाम् अर्थादिज्ञापनाय च प्रवृत्ताः ब्राह्मणग्रन्थाः ; तथैवेदमपीति। प्रथमं

---

[80] पातञ्जलयोगशास्त्रम् ३।१।२

[81] निरुक्तम् १।५।१

ब्राह्मणग्रन्थेष्वेव निर्वचनानि समाम्नातानि ; ततोऽनुब्राह्मणग्रन्थेषु तन्निर्वचनादिकमुक्तम् ; ततो निदानसूत्रादिग्रन्थेषु यद्बहुलीलायितं तदेव भगवता यास्केन पृथग्ग्रन्थरूपेणाबद्धम्। ततश्च नेदं शास्त्रं केवलब्राह्मणग्रन्थीयपदानां व्याख्यामार्गबोधनाय प्रवृत्तम्। अपि तु ब्राह्मणं यदर्थं प्रवृत्तम् तदर्थमेव इदमपि प्रवृत्तमिति सर्वेषां वेदानां मन्त्रगतपदादीनामेव व्याख्यानप्रकारबोधनाय अस्य प्रवृत्तिर्जात इति अत्र ज्ञायते। अत एव स्वयमेव यास्कः निरुक्तग्रन्थोपक्रम उक्तवान्- "छन्दोभ्यः समाहृत्य" इत्यादिः। अस्मादेव विश्लेषणात् निरुक्ते यास्कस्य प्रवृत्तेः प्रयोजनम् स्पष्टम् अवगम्यते।

एवं प्रकारेण प्रथमेऽध्याये निरुक्तस्य परिचयप्रसङ्गे वेदं निरूप्य तदनन्तरं निरुक्तकर्तुः यास्कस्य यत्र कुत्रापि उल्लेखोऽस्ति वेति च विचार्य तस्य ऋषित्वं च निरूप्यैवं यास्कस्य निरुक्तप्रवृत्तौ कारणञ्चेति विषया अत्र प्रस्तुताः। अग्रे निरुक्तचिन्तनम् नाम्नि अग्रगेऽध्याये तस्य यास्कस्य ग्रन्थस्य निरुक्तस्य वेदाङ्गत्वं तदुक्तविषयाणाञ्च स्थूलावलोकनं क्रियते।

## द्वितीयोऽध्यायः

# निरुक्तचिन्तनम्

प्रथमेऽध्याये तावत् निरुक्तकर्तारं यास्कं निरूप्येदानीं तु निरुक्तस्य वेदाङ्गस्य स्थूलावलोकनं क्रियते। प्रथमं तावत् निरुक्तस्य वेदाङ्गत्वं विचार्यते। किन्तु वेदस्थक्लिष्टशब्दार्थबोधकमिदं निरुक्तं कथं तत्र वेदाङ्गत्वं साधयतीति प्रश्नः सर्वथापि जायत एव। तदित्थं हि-

### निरुक्तस्य वेदाङ्गत्वम्

वेदाङ्गग्रन्थास्तु षडेव वर्तन्ते। एवं श्रूयते हि- "षडङ्गविदस्त-त्तथाधीमहे"[1] इति। तथा च पातञ्जलमहाभाष्ये "आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति स्मर्यते। एवं पाणिनीयशिक्षायामपि वेदाङ्गानि षडेवेति ज्ञायते। यथा-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥** इति।

---

[1] गोपथब्राह्मणम् १।१।२७

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

एवं शिक्षाग्रन्थात् स्पष्टीभूतं यन्निरुक्तं वेदाङ्गमेवेति। न केवलं शिक्षाग्रन्थात् अपि तु सर्वेभ्योऽपि प्रमुखेभ्यः इदमेव "वेदाङ्गानि षट्" इति वाक्यं तदर्थञ्च ज्ञायते। परन्तु अत्र वेदस्य क्लिष्टशब्दसङ्ग्रहस्य निघण्टोर्वा निघण्टुभाष्यरूपस्य वा वेदाङ्गत्वं स्वीकार्यम् इति विषये प्रवृत्तिः जायते।

**निघण्टुनिरुक्तैकत्वम् :-**

अनतिप्राचीनानाम् आर्यकोविदस्य मधुसूदनसरस्वतेः प्रस्थानभेद इत्यस्मिन् ग्रन्थे तु निघण्टुनिरुक्तयोरुभयोरपि वेदाङ्गत्वमङ्गीकृतम्। तत्र निरुक्तनिघण्ट्वोः ग्रहणे कथं वा वेदाङ्गानां षट्वमुच्यते इत्यस्य प्रश्नस्य तत्रैव समाधीयते- "एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्याय-शब्दात्मिका निरुक्तान्तर्भूता एव" इति समाधानवाक्यं प्रदर्शयति। परं निघण्टोः निरुक्त एव अन्तर्भावात् वेदाङ्गानां षट्वसिद्धिः दुस्साध्यैव।

सायणोऽपि ऋग्भाष्यभूमिकायां निरुक्तस्य आद्यं लक्षणम् निघण्टोः निरुक्तसम्पादनरूपेणैवोक्तवान्। यथा- "अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्" इति। तस्य चातुरी प्रशंसनीयमेव। किन्तु अन्तर्भावशब्देनैव निघण्टोः निरुक्तत्वं कल्पितवानयं सायणाचार्यः। परं निघण्टोः निरुक्तत्वग्रहणात् सप्तानामप्येषां ग्रन्थानां वेदाङ्गत्वमुपपद्यते। तदा न च वेदाङ्गानां षट्वम्। अयं तु विषयः विचार्य एव।

पाणिनीयशिक्षायां तु "निरुक्तं श्रोत्रमुच्यते" इति कथनादेव केवलनिरुक्तस्य वेदाङ्गत्वं सिद्धम् ; न तु निघण्टोः। अत्र नवीनः प्रश्नः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

उत्पद्यते यत्- परकालजस्य भाष्यस्य वेदाङ्गत्वमस्ति। परन्तु अतिपूर्वकालस्य तदाधारभूतस्य च अस्य मूलस्य कथं वा न ? इति। अस्य तु प्रश्नस्य पाणिनेः शिक्षायां समाधानं नोपलभ्यते।

निरुक्तवृत्तिकृतः दुर्गाचार्यस्य मते तु निरुक्तस्यैव वेदाङ्गत्व-मङ्गीकृतम्। निघण्टोस्तु साक्षाच्छन्दोधर्मित्वमेवेति तस्य सन्मतम्। अर्थात् निघण्टोः साक्षात् समाम्नायत्वमेव अङ्गीकर्तव्यमिति साक्षाद्यास्केन निरुक्ते बोधितम्। तदेव मूलं दुर्गाचार्यः व्याख्यारूपेण लोकाय प्रबोधितवान्। तथा च निरुक्त एव- "निरुक्तं नामेदमङ्गमारभ्यते। प्रधानञ्चेदमितरेभ्योऽङ्गेभ्यः।" इत्युक्तिभिः निरुक्तस्य वेदाङ्गेषु प्राधान्यं स्थापितम्। "तस्यैषा पुनरियं-छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता। सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव ; यथायथापन्नास्ता गौर्गोधर्मा:" इत्युक्त्वा च निघण्टोः छन्दोधर्मित्वं छन्दोऽवयवत्वं च साक्षात् बोधितं दृश्यते। "यथा च अयथापन्ना अप्रकृतविपन्ना परं सामान्यविपन्ना ; अस्तायूथपरिभ्रष्टा ; गौः गोधर्मा एव ; न हि तस्याः यूथपरिभ्रष्टत्वेन गोत्वं नष्टम् ; तथैव छन्दोभ्यः समाहृता एषा पञ्चाध्यायी निघण्टुः छन्द एव। समाहरणहेतुत एव न ह्यस्याः छन्दस्त्वं तिरोभूतमिति भावः।" इति निरुक्तटीकाभूमिकायां दृश्यते। अर्थात् निघण्टुनामकानि समाम्नायात्मकानि पदानि पूर्वकालत एव विश्रुतानि पदान्यनुसृत्य यास्को द्वादशाध्यायात्मकं निरुक्तनामकं ग्रन्थं निर्ममे। तस्य च ग्रन्थस्य सरलत्वात् वेदार्थबोधोपयोगित्वाच्च अस्मत्पूर्वैः तत्कालैश्चाचार्यैः

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

वेदाङ्गत्वं स्वीकृतमिति निरुक्तवृत्तिकारस्याशयः इति स्पष्टं तस्य वाक्येभ्यः अवगम्यते।

यास्कस्य "उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"[2] इत्यस्मात् वचनदर्शनादेव निघण्टोः वेदत्वं वेदाङ्गत्वञ्च नास्तीति बुध्यते। अत्र 'इमं ग्रन्थम्' इत्यस्य वृत्तिकारस्तु दुर्गाचार्यः 'इमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः' इति वृत्तिं कृतवान्। अर्थात् अत्र ग्रन्थशब्देन निघण्टुरेवेति स्पष्टं सर्वसम्मतञ्च। किन्तु गवादिः देवपत्न्यन्तश्च ग्रन्थः निघण्टुरेव ग्राह्यः। स तु ग्रन्थः न निरुक्तम्। अत्रापरमप्यालोच्यमस्ति- उक्तमिदं वचनं न तु यास्कस्येति ज्ञायते। तत्तु यास्कादपि प्राचीनमेव ; तेनैवेहानुक्तमिति दृश्यते- "बिल्मं भिल्मं भासनमिति वा" इत्यनेन निर्वचनेनैव। यः कश्चिदपि स्वयं तस्य वाक्येषु दुरूहं शब्दं प्रयुज्य न तस्य व्याख्यानं दीयत इति लोकप्रसिद्धो सामान्यज्ञेयात्मको विषयः। सर्वत्र स्वपदवर्णनमेव भाष्यलक्षणम्। अत्र वाक्ये स्वपदायैव भाष्यत्वकल्पने न कोऽपि दोषः दृश्यते। अत्र बिल्मशब्दस्य भिल्ममिति अस्य वाक्यस्य प्रतिशब्दमुक्त्वापि भासनमिति अर्थान्तरं दर्शयति। अपि च वा इति संशयं ध्वनयति। तस्मादेव आचार्यप्रवृत्तित्वं ज्ञायते। अग्रे निर्वचनक्रमपरशीलनेऽध्याये अस्मिन् वाक्ये

---

[2] निरुक्तम् १।६।५
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

उक्तयोः शब्दयोः कोऽर्थ इति विवेच्यते। वस्तुतस्तु निघण्टोः वेदाङ्गेभ्यः पृथक्त्वं निरुक्तस्य वेदाङ्गत्वञ्च अस्मदिष्टः विषयः।

अत्र निरुक्तवृत्तिग्रन्थे "वेदाङ्गानि चेतराणि"[3] इति वृत्त्या निघण्टोरपि वेदाङ्गत्वं स्फुरति। इतराणि इत्यनेनात्र निघण्टुः वेदाङ्गमेव किं तेन निरुक्तेन प्रयोजनम् ? इति प्रश्नः उद्धूयते। अस्याः उक्तेः एकदेशित्वकल्पनम् असमञ्जसम्। अत्र एकदेशित्वकल्पनं नाम अव्याप्तिः। अव्याप्तिस्तु लक्ष्यैकदेशावृत्तित्वम्। अर्थात् अत्र लक्षं तु निरुक्तस्य वेदाङ्गत्वम्। अस्मात्तु पूर्वोक्तवाक्यात् निरुक्तस्यैव वेदाङ्गत्वे सन्देहो जायते। तन्निरासार्थमेव तद्दोषः वारणीयः। अपि तु एकदेशित्वं नाम प्राचीनत्वं इत्यपि अर्थः नैय्यायिकानामेव मते प्रसिद्धम्। अत्र निघण्टोः प्राचीनत्वात् निरुक्तस्य न प्रयोजनम् इत्यति अर्थः कल्पितुं शक्यते। अत्र तु प्राचीनत्वमेव समञ्जसमैति मत्वा तदर्थः स्वीकर्तव्यः। यदि वृत्तिकारस्य दुर्गाचार्यस्य वाक्यस्य एकदेशित्वं कल्प्यते तर्हि सर्वश्रेष्ठस्य आचार्यस्य पतञ्जलेः उक्तिष्वपि बहुत्र एकदेशित्वं कल्पनीयम्। अपि तु पाणिनिकात्यायनादीनां मुनीनामपि केषुचन वाक्येषु च एकदेशित्वं कल्पनीयम्। परन्तु सर्वत्र तेषामेव वाक्यानि अन्वितानि। तादृशानामेव वाक्यानामेकदेशित्वकल्पने किमत्र स्वल्पधियः दुर्गाचार्यस्य वाक्येषु ? इति प्रश्नः उदेति। वस्तुतः दुर्गाचार्यस्य निरुक्तवृत्तिभूमिकायां यास्कीयस्य निरुक्तस्यैव वेदाङ्गत्वं दृष्टम्।

---

[3] निरुक्तटीका १।६।५

तन्मूलस्य निघण्टोः न वेदाङ्गत्वं नापि वेदत्वञ्चेति ज्ञेयम्। अर्थात् निघण्टोः ऋषिकृतत्वात् समाम्नायत्वं सिद्धम्। यदि तन्निघण्टुग्रन्थस्य अपौरुषेयत्वं दृश्यते तर्हि तस्य वेदत्वं सिध्यति। एवमेव स तु ग्रन्थः वेदाङ्गस्य निरुक्तस्य मूलभूत एव। तस्मात् निघण्टोः निरुक्तत्वं कल्पनीयम्। परन्तु स च ग्रन्थः वेदाङ्गं वा न वेति विचार्यम्।

तथापि "साक्षात्कृतधर्माण" इत्यादिकात् यास्कोक्तवचनात् निघण्टोर्वेदाङ्गत्वं नास्तीति ज्ञायते। परमिदमपि अवगम्यते यत् यास्कीयादेतन्निरुक्तादपि बहुपूर्वमेव वेदाङ्गानि निर्वृत्तानीति। यदि वेदाङ्गानि पूर्वमेव निर्वृत्तानि तर्हि तदानीं जातस्य निरुक्तस्य कथं वा वेदाङ्गत्वम् अङ्गीकृतम् इति संशयः सर्वथा उद्धूयते। एवं "षडङ्गविदस्तत्तथाधीमहे"[4] इत्यस्मात् वाक्यात् वेदाङ्गानि षडेवेति गुरूपदिष्टानि। पाणिनीयशिक्षापि वेदाङ्गानि षड्सङ्ख्याकानीति उपदिशति। यास्कीय एव निरुक्ते "नैरुक्ताः" "शाकपूणिः" इत्यादिपर्यालोचनया एव यास्कस्य निरुक्तात् पूर्वमेव अन्ये निरुक्तग्रन्था आसन्निति ज्ञायते। अस्मादेव कारणात् निरुक्तग्रन्थस्य यथा निरुक्तत्वं तथैव वेदाङ्गत्वम् इति स्फुटम्। एनमेव विषयमुद्दिश्य शौनकोऽपि-

**शास्त्रापवादात्प्रतिपत्तिभेदात् निन्द्यन्त्यकृत्स्नेति च वर्णशिक्षाम्।**

---

[4] गोपथब्राह्मणम् १।१।२७

**नैतेन शास्त्रेण विशिष्यतेऽन्यैः कृत्स्नञ्च वेदाङ्गमनिन्द्यमार्षम्॥**[5] इति। अत्र तु शिक्षामुद्दिशति। परं आर्षशब्देन सर्वाणि वेदाङ्गानि ग्राह्याणि। तत्र सर्वाण्यपि कृत्स्नानि भवन्ति। तानि चानिन्द्यानि इति तस्यार्थः फलति।

परन्तु निघण्टोः भाष्याभावत्वात् केवलशब्दसङ्ग्रहत्वाच्च ब्राह्मणत्वं निराकृतम्। मन्त्रत्वस्य पृथगुक्तित्वात् मन्त्रत्वमपि वारितम्। परन्तु निरुक्त एव "समाम्नासिषुः" इत्यादिवाक्यस्य प्रदर्शनेन समाम्नाय इति ग्रहणम् साधुरिति विदुषां मतम्। एवं दुर्गाचार्येणापि- "समाम्नायः समाम्नातः स व्याख्यातव्यः" इत्यस्य वाक्यस्य वृत्तिभूमिकायां "सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव" इति वाक्यात् सङ्गतिः प्रदर्श्य वेदस्य समाम्नायत्वं निघण्टोः तत्पृथक्त्वं च निरूपितवान्।

तदित्थं निघण्टुः न मन्त्रग्रन्थः नापि ब्राह्मणग्रन्थः न चैवं वेदाङ्गीभूतः ; अपि तु समाम्नायविशेषः वेदस्य क्लिष्टशब्दसङ्ग्रहः अतिप्राचीनो ग्रन्थश्च। तमनुसृत्य कृतो भाष्यग्रन्थः निरुक्तम् यो निर्वचनविशेषग्रन्थः स च वेदाङ्गम् इति।

अस्तु यदीदमेव निरुक्तं वेदाङ्गीभूतं तर्हि के च विषया अत्र प्रतिपाद्या इति विवेचयामः। सर्वेषामेव वेदाङ्गानां सक्षाद्वा परम्परया वा वेदार्थज्ञानमेव प्रयोजनम्। वेदार्थज्ञानसाधनाय निरुक्ते किं वर्तत इत्यालोच्य प्रसङ्गतः ये विषया अस्मिन् प्रतिपाद्याः तान् सर्वान् विस्तरेण विचारयामः।

---

[5] बहृक्प्रातिशाख्यम् १४।१८

# निरुक्तस्य स्थूलावलोकनम्

इदं निरुक्तं शास्त्रम् आनुश्राविकम्। किन्तु निरुक्तस्य बीजानि श्रुतौ विकीर्णानि भवन्ति। वेदस्य यास्ककृतात् निरुक्तात् पूर्वमेव तत्पूर्वजानि भाष्याणि वर्तन्ते। तेषु प्रथमानि ब्राह्मणानि। तेषु च ब्राह्मणेषु वेदस्य केषाञ्चन शब्दानां सङ्ग्रहरूपेण व्युत्पत्तयः दत्ताः। परन्तु तेषामपि क्लिष्टशब्दाः कश्यपः सङ्गृहीत्वा निघण्टुं ग्रन्थं रचयामास। तस्य निघण्टुग्रन्थस्य भाष्यरूपेण निरुक्तम् नाम निर्वचनग्रन्थः यास्केन कृतः। यास्कस्य निरुक्तादपि पूर्वं कानिचन निरुक्तानि अवर्तन्त इति तस्यैव यास्कस्य निरुक्ते ग्रन्थे स्पष्टं दृश्यते। शाकपूण्यादिभिरपि यास्कपूर्वजैः शब्दानां व्युत्पत्तिः दत्ता। परन्तु तद्ग्रन्थाः न लभन्ते। यास्कस्य तु निरुक्तं नाम ग्रन्थः सर्वत्र प्रचलितो वर्तते। इदानीं तु तस्य ग्रन्थस्य विषयप्रतिपादनमुद्दिश्य विचारयामः।

प्रथमाध्याये यथासामान्यं सङ्गतिनिरूपणाय भूमिकाप्रतिपादनम्। तत्र ग्रन्थकरणे उपोद्घातप्रसङ्गहेतुतावसरेषु निर्वाहकत्वकार्यैक्येषु प्रसङ्गो सङ्गतिरवगम्यते। प्रथमाध्याये भूमिकया सह निघण्टुशब्दनिर्वचनादीनि प्रतिपादितानि। द्वितीयतृतीयाध्याययोः निर्वचनप्रकारादिकथनपूर्वकं नैघण्टु-ककाण्डव्याख्यानं कृतम्। चतुर्थादिषष्ठपर्यन्तं ऐकपदिकाख्यानपूर्वकं नैगमकाण्डं भाषितम्। सप्तममारभ्य द्वादशपर्यन्तं देवतातत्त्वबोधनपूर्वकं दैवतकाण्डव्याख्यानमिष्टम्। परिशिष्टरूपे त्रयोदशेऽध्याये अतिस्तुतिमधि-

कृत्य आत्मतत्त्वोपदेशादीनि प्रदर्शितानि। द्वितीयपरिशिष्टे चतुर्दशाध्यायात्मके परमपुरुषार्थसाधनानि ऊर्ध्वमार्गमधिकृत्य चाख्यातानि। इदानीञ्च किञ्चित्तस्य स्वरूपं विश्लेषयामः।

यद्यपि यास्कीयं निरुक्तं निघण्टोः भाष्यरूपं तर्हि अस्मिन् नैघण्टुकानां सर्वेषामपि पदानां व्युत्पत्तिः न दृश्यते। यथा- निघण्टौ द्वितीयाध्याये द्वितीयपादस्य पृथिव्यादिपदानां व्युत्पत्तिरत्र न दृश्यत एव। अत्र समग्रपादे केवला गौरित्येव व्याख्याता। नान्यानि पदानि व्याख्यातानि। अत एव तद्दोषपरिहारार्थं निरुक्तवृत्तिकारः तदन्ते- "अनुक्रमणं त्वधिकृतम्। तस्मिन् गोशब्दे एको निरुक्तः प्रकारोपदर्शनार्थम्" इति प्रदर्शितवान्।

यास्कीये निरुक्ते वैदिकगूढतत्त्वान्यपि बहूनि प्रतिपादितानि। यथा- "पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे"[6] इत्यादीनि चिन्तनीयानि वाक्यानि बहूनि वर्तन्ते। तानि तु अग्रे चिन्तनीयान्येव।

निरुक्ते प्रायः स्वप्रदर्शितानि निगमश्रुतपदानि सर्वाण्यपि तेनैव यास्केन व्याख्यातानि। निरुक्तटीकाभूमिकायां तु- "निघण्ट्वागतेष्वेव पदेष्वध्यर्थ-शतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि।" इति देवराजो भाषितवान्।

---

[6] निरुक्तम् १।१।२

निरुक्ते प्रायः मन्त्रश्रुतपदान्येव उपात्तानि। न तु ब्राह्मणोपात्तानि पदानि निरुक्तानि। मन्त्रब्राह्मणयोर्वेदत्वेऽपि निरुक्तस्य निघण्टुभाष्यत्वात् वेदभाष्यत्वमपीति वक्तुं शक्यते। न केवलमत्र मन्त्रश्रुतानि पदान्युपात्तानि। अपि तु तत्सहयोगात् लौकिकानाञ्च बहूनां पदानां निरुक्तिः दृश्यते। यथा ग्रन्थे निर्वचनारम्भ एव गोशब्दः निरुक्तः। गोशब्दप्रसङ्गात् पयश्शब्दोऽपि निरुक्तः। तत्प्रसङ्ग एव क्षीरशब्दोऽपि निरुक्तो[7] भवति।

अस्मिन् वेदलोकसाधारणा अपि शब्दाः बहव उपन्यस्ताः। यथा- "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च"[8] इत्यादयः शब्दाः लोकसाधारणे वेदे च उपदिष्टाः। एवं तदनन्तरमेव "अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके। तेषां मनुष्यवद्देवताभिधानम्।"[9] इत्यादिलोकवेदांशद्वयसाधारणानि वाक्यानि बहूनि वर्तन्ते। अत्र तु केवलप्रथमाध्यायजानि पदानि वाक्यानि च प्रस्तुतानि। शेषानि तु अग्रे प्रसङ्गानुसारेण व्यवह्रियन्ते।

यास्कः स्वकृतार्थविपत्तिदोषपरिहारार्थं पूर्वपक्षं निरूप्य तदनन्तरं तस्य सिद्धान्तं स्थापितवान्। तदनन्तरं तेषां पूर्वपक्षिणां मतानि निराकृत्य तस्य सिद्धान्तं निरूपयति। एवमेव केषुचन विषयेषु कानिचन मतानि एव अनुसृत्य तेषां पूर्वपक्षिणां मतमेव तस्य सिद्धान्तमिति प्रकटयति। तस्य

---

[7] निरुक्तम् २।२।१

[8] निरुक्तम् १।१।१

[9] निरुक्तम् १।१।२

यास्कस्य पूर्वपक्षिणां नामानि अत्र दर्शितानि- आग्रयणः, आग्रायणः, आचार्याः, एके, ऐतिहासिकाः, औदुम्बरायणः, औपमन्यवः, और्णवाभः, कात्थक्यः, कौष्टुकिः, गार्ग्यः, गालवः, चर्मशिराः, तैटिकिः, नैदानाः, नैरुक्ताः, परिव्राजकाः, पार्षदानि, मनुः, याज्ञिकाः, पूर्वे याज्ञिकाः, वार्ष्यायणिः, वैयाकरणाः, शाकटायनः, शाकपूणिः, शाकल्यः, स्थौलष्ठीविः, हारिद्रवकम् इति। न तु सर्वदा प्रायः यास्कः शाकटायनस्य वार्ष्यायणेश्च मतं केषुचन विषयेषु अनुसरतीति तस्य निरुक्ते ग्रन्थ एव स्पष्टं दृश्यते।

यास्को न केवलं निर्वचनानि निरुक्तवान्। मन्त्रार्थज्ञानाय याभिः पद्धतिभिः प्रथितव्यम् ताः सर्वाः पद्धतयः अत्रैवोपदिष्टाः। द्वितीयाध्यायस्य प्रथमपादे तु सर्व इम एवोपदेशाः सन्ति। यथा-

"अथ निर्वचनम्। तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षर-वर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्। न संस्कारमाद्रियते विषयवत्यो हि वृत्तयो भवन्ति। यथार्थं विभक्तीः सन्नमयेत्। प्रत्तमवत्तमिति धात्वादौ एव शिष्येते।" इत्यारभ्य "नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपासन्नायानिदं विदे वा [नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया] उपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा-

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।**

**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥**

**य आतृणात्त्य वितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन्।**

**तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्च नाह॥**

**अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।**

**यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्॥**

**यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्।**

**यस्तेन द्रुह्येत्कतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्॥** इति। निधिः शेवधिरिति।"- न केवलमत्रैव तु बहुत्र विद्यते।

तेनैव यास्केन विरुद्धार्थानामपि मन्त्राणां सामान्यविशेषन्यायेन प्रामाण्यं स्वीकार्यम् इति प्रदर्शितम्। यथा- "ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीत्याह हिंसन् ?" इत्यारभ्य "आम्नायवचनादहिंसा प्रतीयते"[10] इति।

यास्केनात्र आशङ्कनीयेषु वेदार्थेषु सिद्धान्तीकरणपद्धतिश्च प्रदर्शिता। यथा- "पद्वदवसं गावः पृथ्यमदनमवतेर्गत्यर्थस्यासौ नामकरणस्तस्मान्ना-वगृह्णन्ति"[11] इत्यादिः।

पूर्वाचार्यैश्च प्रणीतेषु ग्रन्थेषु तत्र भ्रमशून्यत्वविश्वासो न आसीत्। परन्तु तत्र सर्वत्रापि भ्रमस्य सम्भवत्वं दृश्यते। तस्मादेव सर्वत्रापि अतिविश्वासः दूषणीयः। तेनैव सर्वे सिद्धान्ताः प्रमाणैः परीक्षणीयाः।

---

[10] निरुक्तम् १।५।१-२

[11] निरुक्तम् १।६।१

प्रमाणपरीक्षाभिः प्रमाणिते भ्रमे अनादर एव कर्तव्य इति भगवतः यास्कस्य मतम्। यथा- शाकल्यो नाम आचार्यः ऋक्संहितायाः पदपाठकारो बभूव। पाञ्चालो बाभ्रव्यः शाकल्यावलम्बनेनैव क्रमप्रवक्ताभवत्। अत्रैकत्रैव एतयोरुभयोरपि भ्रमः दर्शितः- "वायः ; वेः पुत्रः।" इत्यारभ्य "वेति च य इति च" चकार शाकल्यः" "उदात्तं त्वेवमाख्यातमभविष्यत् ; असु समाप्तश्चार्थः"[12] इति।

निरुक्ते ऊणादिसूत्राणामपि अनादरः सूचितः। तत्र 'व्योम' इत्यस्य 'व्यवने'[13] इत्यर्थः प्रदर्शितः। विपूर्वकात् अवतेः तदभिप्रायः सूचितः। पदकारादीनां तु अयमर्थः सम्मत एव। परन्तु 'वऽओमन्'[14] इति अवग्रहः ऋग्वेदपदपाठे दृश्यते। उणादिसूत्राण्यनुसृत्य तु 'व्येञ्- संवरणे' इत्यनेनैव 'व्योम'[15] इति शब्दः निष्पद्यते। न केवलमत्र बहुषु सन्दर्भेषु च अयं विषयः ज्ञायते।

संहिताभेदतः यत्र यत्र शब्दनिर्वचने मतभेदो दृश्यते। तन्निर्वचनवैविध्यमत्र निरुक्ते सूचितम्। उदाहरणाय बह्वृक्प्रातिशाख्ये पदक्रमे तु सूर्यशब्दस्य न किमपि वैविध्यं प्रदर्शितम्। परन्तु छन्दोगाः 'सूर्यस्य' इत्यस्य 'सु। ऊर्यस्य' इति सूचितवन्तः। अत एव निरुक्ते

---

12 निरुक्तम् ६।५।५

13 निरुक्तम् ११।४।६

14 ऋक्संहितापदपाठः २।३।२२।१

15 उणादिसूत्राणि ४।१५०

निर्वचनवैविध्यम् प्रदर्शितम्। यथा- "सूर्यः सर्त्तेर्वा सुवतेर्वा स्वीर्यतेर्वा"[16] इति। इतोऽपि बहूनां पदानां निर्वचनवैविध्यं तत्रैव दृश्यते। तद्वैविध्यं अग्रे निर्वचनक्रमनिर्णयप्रसङ्गे दर्शितम्।

यदि वेदव्याख्यातृणां प्रामाणिकानां मतान्तरता लक्ष्यते। तर्हि विनिगमनाविरहात् सर्वेषामपि मतानामादरः कर्तव्य इति निदर्शितम्। तद्यथा ऋक्संहितायाः शाकल्यो नाम पदकारः। सामसंहितायाः गार्ग्यो नाम ऋषिः पदकारः। एताभ्यामुद्धृताः सर्वेऽपि ग्रन्थाः निस्सन्देहेन प्रामाणिका एव। परन्तु एको मन्त्रः वर्तते- "यदिन्द्रः चित्र मेहनास्ति" इति। अयमेव मन्त्रः ऋग्वेदे सामवेदे च दृश्यते। ऋक्संहितायाः पदग्रन्थे क्रमग्रन्थादिषु च 'मेहनास्ति' इत्यस्य पदच्छेदात् पदद्वयमित्यवगम्यते। छन्दस्संहितायाः पदग्रन्थे क्रमग्रन्थदिषु च 'मेहनास्ति' इत्यस्य पदचतुष्टयमित्यवगम्यते। अत्रास्य प्रसङ्गस्तु विनिगमनाविरहात् पदच्छेदोऽभ्युपेय इति बोधयितुमेव। परं निरुक्ते[17] मेहनास्ति इत्यस्य निर्वचनम्- "मेहनीयं धनम् अस्ति यत् ; म इह नास्तीति वा त्रीणि मध्यमानि पदानि" इति सूचितम् आचार्यैः। यथा- "यदिन्द्र चित्र मेह नास्ति" इति ऋक्पाठः[18]। "यदिन्द्र चित्र म इह नास्ति" इति सामपाठः[19]।

---

[16] निरुक्तम् १२।२।३

[17] निरुक्तम् ४।१।४

[18] ऋक्संहिता ४।१।१०।१

[19] सामसंहिता ४।२।१।४

मन्त्रद्रष्टृणामृषीणां रचनाविधिषु सर्वथा लक्ष्यः स्थापनीय इत्यपि वेदबुभुत्सुभिः ध्वनितम्। यथा- 'यथाहोदर्शनीयाहोदर्शनीयेति। तत्पुरुच्छेपस्य शीलम्। पुरुच्छेपऋषिः।"[20] इत्यादयः।

"उपग्रामात् समुमेधायि मन्म इत्याश्वमेधिको मन्त्रः"[21] इत्यादिभिः मन्त्रार्थं निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमिति च ध्वनितम्। अत्र निरुक्ते मन्त्राणां व्याख्यावैविध्यञ्च बहुत्र वर्तते। तद्यथा- "इत्यधिदैवतम् ; अथाध्यात्मम्"[22] "इत्यधियज्ञम् ; अथाधिदैवतम्"[23] इत्यादि। एवमेव क्वचित् क्वचित् एकस्यैव शब्दस्य त्रिविधं व्याख्यानमपि कृतम्। यथा सोमशब्दस्य ओषधिः चन्द्रमश्चेत्येतावर्थौ कृतौ[24]। अन्यत्र[25] तस्यैव सोमशब्दस्य सूर्य आत्मा चेत्यर्थौ स्वीकृतौ भवतः। तथा चात्र ओषध्यर्थस्त्वधियज्ञः ; चन्द्रसूर्यार्थौ अधिदैवतौ आत्मरूपस्त्वध्यात्मिक इति विवेकः।

प्रथमपरिशिष्टे त्रिविधव्याख्यानेषु अधिदैवतस्यैव प्राधान्यं ध्वनितम्- "यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति"[26]

---

[20] निरुक्तम् १०।४।५

[21] आश्वलायनगृह्यसूत्राणि ६।४।७

[22] निरुक्तम् ३।२।६

[23] निरुक्तम् ११।१।४

[24] निरुक्तम् ११।१।४

[25] निरुक्तम् १३।२।१२

[26] निरुक्तम् १३।१।१३

इति। एवञ्च पदार्थज्ञानमेव निरुक्तस्यास्य प्राधान्यं फलमिति च ज्ञापितम्। अन्यत्रान्यथापि स्वस्य विज्ञानप्रियता ज्ञापिता। तथा हि "नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया"[27] इति।

एवमेवात्र कालभेदतो देशभेदतश्च नामभेदादीन्यपि सम्भाव्यानीति च ज्ञापितानि। तद्यथा- "आर्जीकायां विपाडित्याहुः"[28]-इति। "विजामातेति शश्वद्दक्षिणाजाः क्रीता पतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतः"[29] इति च। "गर्त्ता रोहिणीव धनलाभाय दाक्षिणाजी"[30] इत्येवमादीनि च।

निरुक्ते मन्त्राणामुत्पत्तिबीजान्यपि बोधितान्येव। तथा हि- "अथापि स्तुतिरेव भवति नाशीर्वादः- 'इन्द्रस्य नु वीर्याणि प्र वोचम्' इति"[31] यथा सूक्ते बोधितम् तथैवात्र। एवमेव "अथापि शपयाभिशापौ- 'अद्यामुरीय यदि यातुधानो अस्मि' इत्यारभ्य 'अधा स वीरैर्दशभिर्वियूयाः' इति"[32] च। एवञ्च तत्रैव ऋक्संहितायां[33]- "अथापि कस्यचिद्भावस्याचिख्यासा- 'न मृत्युरासीदमृतं न तर्हि' ; तम आसीत्तमसा गूल्हमग्रे" इति च दृश्यत एव। अथापि निन्दाप्रशंसे- "केवलाघो भवति केवलादी ; भोजस्येदं पुष्करिणीव

---

27 निरुक्तम् २।१।६

28 निरुक्तम् ९।३।५

29 निरुक्तम् ६।२।६

30 निरुक्तम् ३।१।५

31 ऋक्संहिता १।३२

32 ऋक्संहिता ७।१०४।१५

33 ऋक्संहिता १०।१२९।२-३

वेश्म"[34] इति। एवमेव अक्षसूक्ते[35] द्यूतनिन्दा कृषिप्रशंसा च उद्दिश्य निरुक्ते "एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति"[36] इति बोधितम्।

अपि च मनुष्याणामेव अध्ययनादितपः प्रभावादृषित्वमाप्यमिति चाख्यातम् वाक्यम्। "तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् ; तदृषीणामृषित्वम्"[37] इति च वाक्यम् वेदसम्मतम् निरुक्ते दृश्यते। तत्रैव परिशिष्टेऽपि "यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद्भवति"[38] इत्येवमादीनि वाक्यानि यास्करचितेषु आख्यातसम्मितानि भवन्ति।

मन्त्राणामुत्पत्तौ हि बहुत्र सांसारिकघटनादीनामपि हेतुत्वं दृश्यत एव। तद्यथा- "त्रितं कूपेऽवहितमेतत् सूक्तं ब्रतिबभौ"[39] ; "इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः परिसङ्ख्यायाह"[40] ; "ऋषिपुत्र्या विलपितं वेदयन्ते"[41] इत्यादी-नि वाक्यानि निरुक्ते द्रष्टव्यानि। तैर्वाक्यैः मन्त्रोत्पत्तिहेतुत्वं स्पष्टं ज्ञायते यत् सर्व एव मन्त्रा यज्ञसम्पादनायैव दृष्टाः। परं यास्कमते तु नैव सर्वेषां यज्ञसम्पादनायैवोत्पत्तिरित्यपि सुव्यक्तम्।

---

[34] ऋक्संहिता १०।११७।६

[35] ऋक्संहिता १०।३४।१३

[36] निरुक्तम् ७।१।३

[37] निरुक्तम् २।३।२

[38] निरुक्तम् १३।१।१३

[39] निरुक्तम् ४।१।६

[40] निरुक्तम् ४।२।७

[41] निरुक्तम् ५।१।२

वेदार्थबोधस्य अतिदुरूहत्वमपि तत्रैव वर्णितम् दृश्यते। तद्यथा- "अप्येक पश्यन्न पश्यति"[42] इत्यादि। एवमन्यत्रान्यत्र परिशिष्टेऽपि "यस्तन्न वेद किमृचा करिष्यति"[43] इति दृश्यते। एवमपि "अयं मन्त्रार्थ-चिन्ताभ्यूहः"[44] इति ; "तस्यास्तपसा पारमीप्सितव्यम्"[45] इत्यादि वाक्यानां दर्शनात् वेदस्यार्थस्य दुरूहत्वसिद्धिः प्राप्यत एव।

यास्केन तस्य निरुक्तग्रन्थे अन्यमेकं नियमं बोधयति। स च वेदे विविधमन्त्रेषु उच्चरितं तथापि सर्वसम्मतम्। तच्च अयोग्यपात्राय उपदेशदानं निषिद्धमिति- "नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नायानिदं विदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा"[46] इत्यनेन वाक्येन बोधयति।

मन्त्राणां दैवत्वनिर्णयस्य दुरूहत्वं वेदार्थबोधगर्वस्याकर्तव्यत्व-ञ्चेत्येतद्द्वयमपि दृष्टान्तप्रदर्शनेन दृढीकृतम्। तद्यथा- "शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां

---

[42] निरुक्तम् १।६।३

[43] निरुक्तम् १३।१।१०

[44] निरुक्तम् १३।१।१२

[45] निरुक्तम् १३।१।१३

[46] निरुक्तम् २।१।६

न जज्ञे। तां पप्रच्छ विविदिषाणि त्वेति। सास्मा एतामृचमादिदेशैषा मद्देवतेति"[47] इति च यास्केन स्पष्टं बोधितम्।

इह हि निरुक्तवचने 'देवतोभयलिङ्गा' इति यदस्ति; उभयविधलिङ्गयुक्तत्वं यस्यां मन्त्रदेवतायां तादृशी उभयलिङ्गा मन्त्रदेवता प्रादुर्बभूव तन्मनस्युदिताभवदित्यर्थः। यस्य मन्त्रस्य देवतानिर्णये लिङ्गद्वयहेतुकः संशयो भवेदेव ; तादृशं मन्त्रैकं स संहर्त्यैवेति सर्वत्र अभिप्रायः। तदुदाहरणप्रसङ्गे तत्तथा श्रूयते हि- पूर्वार्धार्चारम्भे 'सः' इति कर्तृपदम् ; उत्तरार्धार्चारम्भे 'सा' इति कर्तृपदञ्चेति तन्मन्त्रदेवता पुंस्त्वस्त्रीत्वोभयविधलिङ्गयुक्ता इत्यतः तस्य मन्त्रस्य का देवता ? इत्येवं संशयः सम्भवेदेव। 'तां पप्रच्छ' इत्यादीनि एतादृशं संशयस्यापकरणं तु तत्तन्मन्त्रार्थालोचनयैव भवितव्यमिति अभिप्रायेणैवोक्तमिति ज्ञायते। सम्यगालोचिता सती तादृशी ऋगेव स्वयं स्वदेवतामभिव्यनक्तीति तात्पर्यम्। तदेवोदाहृता एषा ऋक्[48] (उपरिप्रदर्शिता)। अपि वा देवतोभयलिङ्गा इत्येकं पदम् ; ऋगेव तस्य वाच्यार्थः। तादृशी ऋक् तत्स्मृतिपथमारूढेति भावः। 'सा' ऋक् 'एतामृचमादिदेश' स्वात्मानं प्रकाशितवती ; पुनः पुनः चिन्तान्दोलनेन तादृगर्थस्तन्मनसि स्फुटं प्रतिबभाविति भावः। सत्येषा सैव ऋक् कथितवतीव 'एषा' स्त्रीपुंस्वरूपा

---

[47] निरुक्तम् २।२।४

[48] ऋक्संहिता १।१६४।२९ {निरुक्तम् २।२।५}

उभयात्मिका ; वस्तुतः एकैव 'मद्देवता' मम देवतेति यावदर्थं तत्रैव निरुक्ते यास्केन बोधितम्। परं वाक्यलाघवत्वात् तस्यार्थः न स्फुरति। दुर्गाचार्यस्य वृत्त्यध्ययनेन तज्ज्ञायत एव।

तेनैव यास्केन वेदार्थविषये बहुत्र संशयस्यावश्यम्भाविता च दर्शिता। तद्यथा- "पूषा त्वेतश्चावतु"[49] इत्येतस्या ऋचो व्याख्यानावसरे यास्केन स्वकण्ठरवेणैवोक्तम्- "स त्वेतेभ्यः परिददत्पितृभ्य इति सांशयिकस्तृतीयः पादः। पूषा पुरस्तात् तस्यान्वादेश इत्येकम्। अग्निरुपरिष्टात् तस्य प्रकीर्तनेत्यपरम्"[50] इति।

वैदिकोपाख्यानानाम् उपमादिमूलकत्ववर्णनेनावास्तविकत्वमपीह प्रतिपादितं बहुत्र दृश्यते। तद्यथा- "तत्को वृत्रः ? मेघ इति नैरुक्ताः; त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ; अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते ; तत्रोपमार्थेन युद्धवर्णा भवन्ति"[51] इति। तदेवमादि इतिहासस्य अतात्त्विकत्वं स्फुटमिति तस्य निरुक्तस्य वृत्ते स्पष्टं ज्ञायते। अयञ्च विषयः अग्रगेऽध्याये स्फुटं विचार्यते।

तदेवं मन्त्रेषु सास्नादिसम्बद्धाः शब्दाः श्रुता अपि साहचर्यादिमूलका गौणार्था एव। न तु मुख्यार्था इति च यास्केन तत्रैव ग्रन्थे बहुत्रावेदितम्। तद्यथा- "उषसमस्य (आदित्यस्य) स्वसारमाह-

---

[49] ऋक्संहिता ७।६।२३।३

[50] निरुक्तम् ७।३।२

[51] निरुक्तम् २।५।२

साहचर्याद्रसहरणाद्वा"[52] इति। एवमेव "पिता दुहितुर्गर्भमाधात्"[53] इत्यारभ्य "पिता = पालयिता" "पर्जन्यः = पृथिव्याः"[54] इत्यादि पर्यन्तं च स्पष्टं तद्दृश्यते।

मीमांसाग्रन्थेषु यथा ब्राह्मणग्रन्थप्रोक्तानामपि प्रावाहणिरित्यादीनां सर्वेषामेव संज्ञापदानां यौगिकत्वं तथा कल्पितव्यक्तिवाचकत्वञ्च सिद्धान्तितम् ; तद्रूपविषयाः नात्र निरुक्ते दृश्यन्ते। प्रकृतव्यक्तिनामानि वस्तुनामान्यपि श्रूयन्ते मन्त्रेष्वपीति सूचितम्। तत्किं मन्त्रभाष्यरूपेषु ब्राह्मणवाक्येष्विति स्फुटम् निरूपितम्। तद्यथा- "स्थूरं राधं शताश्वं कुरुङ्गस्य दिविष्टिषु"[55] इति मन्त्रस्य निरुक्ते व्याख्यानायोक्तम् "कुरुङ्गो राजा बभूव ; कुरुगमनाद्वा कुलगमनाद्वा"[56] इति। एवमेव "बतो बतासि यम"[57] इति मन्त्रस्य व्याख्याने हि एवमुक्तं यास्केन- "लिबुजा व्रततिर्भवति"[58] इत्यादिभिर्वाक्यैः यास्कः स्थूलातिसंशयान् संहरति।

निरुक्ते वस्तुतत्त्वनिर्णयाय ब्राह्मणवचनान्यपि बहून्युद्धृतानि। तद्यथा- "षष्ठिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं

---

[52] निरुक्तम् ३।३।४

[53] ऋक्संहिता १।२६४।३३

[54] निरुक्तम् ४।३।५

[55] ऋक्संहिता ५।७।३३।४

[56] निरुक्तम् ६।४।८

[57] ऋक्संहिता ६।७।८।३

[58] निरुक्तम् ६।५।५

समासेन" ; "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन"[59] इत्यादीनि समस्तानि ब्राह्मणोद्धृतान्येवात्र निरुक्ते द्रष्टव्यानि।

प्रसङ्गसङ्गत्या बहूनां ब्राह्मणवचनानाम् एकदेश्युक्तितया प्राचीनत्वेन अप्रामाण्यञ्चेतीह यास्केन दर्शितम्। तद्यथा- "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"[60] इत्येकेनैव वाक्येन तत्स्फुटं प्रदर्शितवान्।

वेदानां प्रामाण्यं तु यास्केन सद्धृदयेनैवाङ्गीकृतम्। अत एवोक्तम्- "आम्नायवचनादहिंसा प्रतीयते"[61] इति। एवं "आम्नायवचनादेतद्भवति"[62] इति वाक्यैः यदि वेदस्याम्नायत्वं प्रतिपादितम् तर्हि तेषामङ्गीकारः कृत एवेति ऐकग्रीवो निश्चयः।

एवं वैदिकवचनेषु तस्य श्रद्धातिशय्यञ्च गम्यते। तदुक्तम् हि यास्केन- "यथा एतदविस्पष्टार्था भवन्तीति ; नैष स्थाणोरपराधो यदेनमन्धो न पश्यति ; पुरुषापराधः स भवति"[63] इत्यादिवाक्यैः तस्य वेदे श्रद्धातिशयत्वं कल्पनीयम् अस्माभिर्मनोभिः।

निरुक्त एकत्र परलोकास्वीकारकारिणामपि निन्दा कृता। तद्यथा- "किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति धर्म्मम्। आ नो भर

---

[59] निरुक्तम् ४।४।६

[60] निरुक्तम् ७।७।१

[61] निरुक्तम् १।५।२

[62] निरुक्तम् ७।७।१

[63] निरुक्तम् १।५।२

प्रमगन्दस्य वेदा नैवाशाखं मघवन् रन्धया नः।"[64] इत्येतन्मन्त्रव्याख्यानावसरे निरुक्तकारेणोक्तम् यत्- 'किं ते कुर्वन्ति कीकटेषु गावः ; कीकटा नाम देशोऽनार्यनिवासः ; कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा। नैव चाशिरं दुह्रे न तपन्ति धर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि। मगन्दः कुसूदीमाङ्गदो मा मागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽप्यन्त-कुसीदिकुलीनः ; प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः ; पण्डको वा पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव ब्रीडयति तस्तम्भे ; नैचाशाखं नीचाशाखो नीचैः शाखः ; शाखाः तन्नो मघवन् रन्धयेति रध्यतिर्वशगमने"[65] इति परलोकास्वीकारिणां मतं यास्कः स्वयम् निर्मूलयति।

निरुक्ते क्वचित् क्वचित् मन्त्रकालप्रचलिताः सामाजिकव्यवहार-कथाश्चाख्याताः इति प्रसङ्गतः प्रतीयन्ते। तद्यथा- "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते ; न पुंसः ; पुंसोऽपीत्येके" इति। एवमौरसभिन्नानां सुक्षाणामप्राशस्त्यं चाह यास्कः स्वयमेवाह- "अन्योदर्यो मनसापि न मन्तव्यो ममायमिति"[66] इति। "रामा रमणायोपेयते न धर्माय ; कृष्णजातीया"[67] इति च दृश्यत एव।

---

[64] ऋक्संहिता ३।३।२१।४

[65] निरुक्तम् ६।६।४

[66] निरुक्तम् ३।१।३

[67] निरुक्तम् १२।२।२

अत्र यदुदाहृतं- "देवरः कस्मात् ? द्वितीयो वर उच्यते" इति। सा भ्रान्तिरेव; प्राचीनपुस्तके तथा पाठानुपलब्धेः; विधवेति पूर्वपदनिर्वचनमकृत्वैव देवरपदनिर्वचनस्यायुक्तत्वप्रतीतेः। किञ्च तत्रैव ततः किञ्चिदुत्तरम् "देवरो दीव्यतिकर्म्मा" इति देवरनिर्वचनश्रुतेः ; "कुहस्विद्दोषा' इत्येतन्निगमस्य चान्यविधार्थावभासाच्च। तथा हि 'कनीयसा ज्यायांसमुपमिमीते' इति यास्केनैव निरुक्ते[68] स्वोक्तस्य उदाहरणभूता एषा ऋगुद्धृता-

**कु ह स्विद्दोषा ? कु ह वस्तोरश्विना ?**

**कु हाभिपित्वं करतः ? कु होषतुः ?।**

**को वांशपुत्रा विधवेव देवरम् ?**

**मर्यं न योषा कृणते सधस्य आ ?॥** [69] इति।

अस्याः ऋचः यास्कस्य सम्मतोऽर्थः एष एव दृश्यते- हे 'अश्विना' अश्विनौ सूर्याचन्द्रमसौ ! उपलक्षणञ्चैतत् पान्थयोः ; हे पान्थौ ! दीर्घाध्वभ्रमणकारिणोर्युवयोः ; 'दोषा' रात्रिः 'कुहस्विद्' क्वातीता? अपि वा 'दोषा' रात्रौ क्व भवथः ? एवं 'वस्तोः' दिवा 'कुहस्विद्' ? 'कुहाभिपित्वं करतः' क्व अभिप्राप्तिं भोजनस्य कुरुथः ? 'कुहोषतुः' क्व वसथः विश्रामाय ? किञ्च 'वां' युवयोः 'शयत्रा' शयने 'देवरं' बालकं प्रतिभ्रातरं प्रति 'विधवा'

---

[68] निरुक्तम् ३।३।३

[69] निरुक्तम् १०।४१।२

पतिहीना भ्रातृजाया इव 'कः' पुरुषः सस्नेहं शुश्रूषेत ? अपि 'योषा' स्त्री 'मर्यं' युवानं स्वपतिम् 'न' इव 'सधस्थे' सहस्थाने 'आ कृणुते' आकुरुते ; को जन इति अर्थः फलति। तदेवमत्र किञ्चिदुद्देश्यं साधयितुं बहुदूरगामिनः पान्थस्य अहर्निशयोर्गमागमने प्रतिदृष्टिर्न युज्यते ; नापि भोजनविश्रामयोः ; न च स्वापशुश्रूषनयोः इत्युपदेशो व्यक्तः। कुमारं देवरं प्रति भ्रातृजायायाः स्नेहातिशय्यप्रयुक्तः पालनभावः ; पतिं प्रति स्त्रियाश्च प्रेमप्रणयोदितात्मभाव-श्चेत्येतावपि नैसर्गिकाविति चेह द्योतितम्। न हि विवाहितपतिमातृका विधवेत्युच्येत; नापि विवाहितभ्रातृजायोऽपि स्याद्देवरः। मिथोऽविवाहितयो-रेव विधवादेवरयोरेवात्र मन्त्रे शयनस्थितिर्वर्णितेति चेत् ; तत्किं प्रेम्णा वात्सल्येन वा ? आद्ये वेदस्य व्यभिचारवर्णनदोष अनिवार्यः स्यात्। अन्त्ये तु स्वीकृते "देवरः कस्मात् ? द्वितीयो वर उच्यते" इत्येतन्निर्वचनस्यात्र उल्लेखः कुतो न प्रमत्तगीततामेयादिति पक्षपातशून्यैः सुधीभिरेवार्य्यै-राकल्यतामिति मद्वाक्यम्।

निरुक्तेऽत्र पापपुण्ययोश्चात्र दिक्प्रदर्शनेन निदर्शनान्युपदिष्टानि। तद्यथा- 'न पापा मन्यामहे ; नाधनाः ; न ज्वलनेन हीनाः ; अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्म इति ऋषिरवोचत्"[70] इति। "सप्तमर्यादाः कवयश्चक्रुः। तासामेकामप्यधि-गच्छन्नंहस्वान् भवति; स्तेयम्; तल्पारोहणम् ; ब्रह्महत्याम् ; भ्रूणहत्याम् ; सुरापानम् ; दुष्कृतस्य कर्मणः

[70] निरुक्तम् ६।५।२

पुनः पुनः सेवाम् ; पातके नृतोद्यमिति"[71] इति। "ब्राह्मणाय बुभुक्षितायौदनं देहि; स्नातायानुलेपनम् ; पिपासिते पानीयम्"[72] इत्येवमादीनि च द्रष्टव्यानि।

यास्केन आब्रह्मस्तम्बपर्यन्तानां सर्वेषामेव पदार्थानामिह देवत्वञ्चोररीकृतम्। तथा हि- "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते ; तद्देवतः स मन्त्रो भवति"[73] इति। "यो देवः सा देवता"[74] इति च दृश्यते। "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानी भवतीति वा" इति देवशब्दनिर्वचनञ्च तत्रैव दृश्यते। द्युशब्दश्चात्र नभोमण्डलमात्रस्योपलक्षकः; एवं हि अन्तरिक्षस्थानां सौरजगदहिर्भूतानां ध्रुवादीनाञ्च ग्रहणमिह सिद्ध्यति। तदेवमिन्द्रवाय्वादीनामचेतनानां वृष्ट्यादिदानहेतुकम् ; यायावरराजादीनां चेतनानां चार्थादिदानहेतुकं देवत्वम् ; अश्वादिजीवानामजीवानाञ्च ग्रावादीनां दीप्तिहेतुकं देवत्वम् ; अग्निचन्द्रपर्जन्यादीनां ब्रह्मवर्चस्विनां विदुषाञ्च द्योतनहेतुकं देवत्वम् ; सूर्यसूर्यकरादीनां तदुपरिस्थानां तारकादीनाञ्च द्युस्थत्वनिबन्धनं देवत्वम् ; यत्र त्वीश्वरे सर्व एवैते गुणा उपपद्यन्ते ; तस्य देवत्वस्य तु कैव कथा। तदेवम् आब्रह्मस्तम्बपर्यान्तानां सर्वेषामेव पदार्थानां देवत्वमुपगम्यते। द्युस्थत्वे सति दानादिगुणवत्त्वमिदमेकमेव देवलक्षणं स्वीकार्यमिति मते तु सूर्येन्द्राग्न्यनिलेन्दुप्रभृतीनां मूले भमण्डलस्थानामेव

---

[71] निरुक्तम् ६।५।४

[72] निरुक्तम् ७।३।१०

[73] निरुक्तम् ७।१।१

[74] निरुक्तम् ७।४।२

पदार्थानां मुख्यं देवत्वम्। तत्तत्स्थानभक्तिसाहचर्यतस्त्वन्येषां भूरादि-लोकानां तत्रत्यानामश्वसोमौषध्यादीनाम् अपीत्येव विशेषः।

## निरुक्ते देवताविचारः

तथा च यास्केनैवोक्तम्- "तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः"[75] इति ; "तासां [तिसृणां देवतानां] भक्तिसाहचर्यं व्याख्यास्यामः। अथैतान्यग्निभक्तीनि- "अयं लोकः" इत्यारभ्य "ये च देवगणाः समाम्नाताः प्रथमे स्थाने"[76] इत्यादि च द्रष्टव्यम्। तानि च प्रथमे स्थाने समाम्नातानां देवानां नामानि निघण्टावाम्नातानि- "अश्वः शकुनिः मण्डुकाः"[77] इत्यादीनि षड्विंशत् द्रष्टव्यानि। व्याख्याताश्च ता देवता निरुक्ते समन्त्रोदाहरणम्- "अथ यानि पृथिव्यायतनानि स्तुतिं लभन्ते; तान्यतोऽनुक्रमिष्यामः। तेषामश्वः प्रथमागामी भवति।"[78] इति। एवं "अथैतानीन्द्रभक्तीनि अन्तरिक्षलोकः" इत्यारभ्य "ये च देवगणाः समाम्नाता मध्यमे स्थाने"[79] इत्याद्युक्तं तत्र तदुत्तरम्। मध्यमे समाम्नातानां देवानां नामानि च तत्रैव निघण्टौ- "श्येनः

---

[75] निरुक्तम् ७।२।१

[76] निरुक्तम् ७।३।२

[77] काश्यपनिघण्टुः ५।३।१-३६

[78] निरुक्तम् ९।१-४३

[79] निरुक्तम् ७।३।३

सोमः चन्द्रमाः"[80] इत्यादीनि षड्विंशत्। अपि च ताः देवताः निरुक्ते समन्त्रोदाहरणम् व्याख्याताः "श्येनो व्याख्यातस्तस्यैषा भवति"[81] इत्यादिना। एवम् "अथैतान्यादित्यभक्तीनि असौ लोकः" इत्यारभ्य "ये च देवगणाः समाम्नाता उत्तमे स्थाने"[82] इत्यादिपर्यन्तं चोक्तं तत उत्तरम्। उत्तमे स्थाने समाम्नातानां देवानां नामान्यपि तत्रैव निघण्टौ- "अश्विनौ उषाः सूर्या"[83] इत्यादीनि एकत्रिंशदाम्नातानि। ता अपि देवताः निरुक्ते समन्त्रोदाहरणमेव व्याख्याता एव- "अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतः"[84] इत्यादिना। तदेवं प्रधानतो देवतात्रित्वेऽपि स्थानभक्त्यादितो तद्बहुत्वं च न विरुद्धम्। तत एव यास्केनोक्तम् निरुक्ते- "तासां (तिसृणां देवतानां) माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि"[85] इति। भागो विभागो भक्तिश्चैकार्थाः। महाभागस्य भावो माहाभाग्यम्। तच्च माहाभाग्यम् एकस्थानभात्त्वेन ; एकस्मिन् मन्त्रे साहचर्यतया आम्नातत्वेन ; एककर्मभात्त्वेन ; एकवाच्यभात्त्वेन च भवति। तस्मान्माहाभाग्यादेव देवबहुत्वं स्वीकार्यमिति तदर्थः। तस्मात् वैदिकमन्त्रेषु स्तुता एव पदार्थाः

---

[80] काश्यपनिघण्टुः ५।५।१-३६

[81] निरुक्तम् ११।१-५०

[82] निरुक्तम् ७।३।४

[83] काश्यपनिघण्टुः ५।६।१-३१

[84] निरुक्तम् १२।१-४६

[85] निरुक्तम् ७।२।१

तन्मन्त्रतः स्तुतिकाले एव च देवत्वेन स्तुत्या भवन्ति नान्ये नापयन्यत्रेत्येव वैदिकसिद्धान्तः। अत एव ते मन्त्रमयी देवतेत्येव स्वीकुर्वन्तीति च याज्ञिकाः प्रवदन्ति। तदेवं देवानाम् असङ्ख्येयत्वेऽपि दाशतय्यां प्रधानतया अग्निवाय्विन्द्रसूर्याणां स्तुत्यादिदर्शनात् त एव चत्वारो देवा मुख्या गण्यन्ते। तत्रापि इन्द्रस्य वाय्वादिविशेषत्वेनैवाभ्युपगमात् देवतात्रित्वमेव सम्पद्यते। तदेवमत्र पृथिव्यामग्निरेव देवः जलादयस्तदेकस्थानास्त्वप्रधानाः; अश्वादय-श्चेतना इध्मादयोऽचेतनाश्च पारिभाषिकाः। अन्तरिक्षे वायुर्वेन्द्रो वा मुख्यो देवः ; पर्जन्यादयस्तदेकस्थानास्त्वप्रधानाः ; श्येनादयोऽन्तरिक्षचराश्चेतना वागादयोऽचेतनाश्च पारिभाषिकाः। द्युलोकेऽप्येवं सूर्यो मुख्यः; अश्वप्रभृतयस्तदेकस्थानास्त्वप्रधानाः ; पारिभाषिकदेवास्तु तत्र नैव सन्तीति गम्यते। ब्राह्मणग्रन्थेषु तत्रत्यानां तथाविधानामनुल्लेखात् इति तत्र स्पष्टम्।

देवतानां पुरुषाकारादिचिन्तनस्य अतात्त्विकत्वञ्चात्र निरुक्ते उपन्यस्तम्- "अथाकारचिन्तनं देवतानाम्"[86] इत्यादिभिः। तदत्र पारिभाषिकदेवत्वमापन्नानाम् अश्वशकुन्यादीनाञ्चेतनानाम्; अपीध्मवागा-दीनाम् अचेतनानाञ्च देवशरीरत्वं कलत्रापत्त्यादिमत्वं रागद्वेषादियुक्तत्वञ्च नास्तीति तु लाङ्गुलस्कन्धपांशुलपादुकैः हालिकैरप्यभिगन्तुं शक्यते। मुख्यदेवानाम् अग्न्यादीनां तु तत्तदस्ति नास्ति वेति संशयः अवेदविदुषां बालानां स्यात् ; परमत्र पौराणिका एव अस्य संशयस्य उत्थापकाः। वस्तुतो

---

86 निरुक्तम् ७।२।२-३

यथा पारिभाषिकदेवानां प्रत्यक्षदृश्यानां सर्वत्र सर्वैः व्यवहार्याणाम् इध्मादीनां देवशरीराद्यभाववत्त्वेऽपि देवत्वं भवत्येव इत्युररीकार्यम् ; मुख्यानाम् अग्न्यादीनामपि देवानां नूनं तथैव। यास्कोक्तेभ्यः तत्तन्नामनिर्वचनस्थाननिर्देशकर्मनिरूपणोत्पत्तिवर्णनेभ्यः तथैव प्रतीतिः। ब्राह्मणविहितानां विप्रणयनादीनाम् अत्रैवोपपत्तेः ; तत्तन्मन्त्रेष्वपि तादृशार्थप्रतिपादकवर्णनश्रुतेः; सोदाहरणदेवलक्षणान्यतमश्रुतितोऽपि तथैवावगतेः; दृष्टैरेवैतैः उपपन्ने यज्ञादौ यज्ञादिफले चैषामदृष्टविग्रहादि-मत्त्वकल्पनानौचित्याच्चेति। एतत्पञ्चहेतुवर्णनम् इत्यधिकृत्य ऐतरेया-लोचनमिति[87] ग्रन्थे द्रष्टव्यम्।

यास्कस्य मते पितृणाञ्च त्रैविध्यमिष्टमित्येव अवगम्यते। तथा हि- "पितरो व्याख्यातास्तेषामेषा भवति" इत्युक्त्वा

**"उदीरतामवर उत् परास**
**उन्मध्यमाः पितरः सोम्यासः।**
**असुं य ईयुरवृका ऋतज्ञास्**
**ते नोऽवन्तु पितरो हवेषु"**[88] इति।

तेनैव यास्केन एषा ऋक् अत्रैव निरुक्ते उदाहृता सैवैवं व्याख्याता- "उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सौम्याः

[87] ऐतरेयालोचनम् सं० २ पृ० १६२-१७८

[88] निरुक्तम् १०।१५।१

सोमसम्पादिनस्तेऽसुं ये प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न अगच्छन्तु पितरो ह्वानेषु"[89] इति द्रष्टव्यम् ।

तथा च तस्या ऋच एषः अर्थः सम्पद्यते- हवेषु = ह्वानेषु अस्मदाह्वानेषु सत्सु ते पितरः = पितृगणाः नः = अस्मान् अवन्तु = आगच्छन्तु। ते कीदृशाः ? इत्याह- ये असुं = प्राणम् ईर्युः = अन्वीयुः प्राप्तवन्तः पूर्वं प्राणान्विता आसन्निति यावत्। तत्र जीवितकाले आवृकाः = अनमित्राः सर्वत्र सर्वदैव साधुव्यवहारतः अमित्रशून्याः ; ऋतज्ञाः = सत्यज्ञा वा यज्ञज्ञा कर्त्ततया कारयितृतया वा यज्ञानुष्ठानविदः ; सोम्यासः = सोम्याः सोम्यसम्पादिनश्च आसन्निति। ते च कतिविधाः? इत्याह- अवरे ; परासः = परे ; मध्यमाः चेति त्रिविधाः। तत्र परे द्युस्थान्तरिक्षचारिणः ; "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यादिना छान्दोग्ये[90] वर्णिताः देवयानमार्गेषु सूर्यलोकं गताः। मध्यमाः द्यावापृथिव्यावन्तरेण स्थायिनः ; "य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते" इत्यादिना छान्दोग्ये[91] वर्णिताः पितृयानमार्गेण चन्द्रलोकं गताः। अवरे भूपृष्ठस्थान्तरिक्षचारिणः; "अथैतयोः पथोर्न कतरेण च" इत्यादिना छान्दोग्ये[92] वर्णिताः पृथिव्यामेव निरन्तरावर्त्तिनः। तदेषां त्रिविधानां पितृणां मध्ये येऽवरास्तेषाम-

---

[89] निरुक्तम् ११।२।६

[90] छान्दोग्यब्राह्मणम् ५।१०।१-२

[91] छान्दोग्यब्राह्मणम् ५।१०।३-६

[92] छान्दोग्यब्राह्मणम् ५।१०।८

प्राप्तमार्गाणाम् असकृदावर्त्तित्वेन क्वचिदपि दीर्घकालस्थितिसम्भावनाभावात् न पितृलोकस्थत्वम्। ये परास्तेषाम् अपि अनावर्त्तित्व श्रुतेस्तथात्वमेव। ये तु मध्यमाश्चन्द्रलोकं पितृलोकं वा गताः ; तेषामेव स्वस्थानस्थत्वेन प्राधान्यमिष्टम्। अत एव अन्तरिक्षस्थानेष्वेव पठितं पितर इति पदम्। यास्केनापि निरुक्ते दर्शितम् यत्- "माध्यमिको यम इत्याहुस्तस्मान्माध्य-मिकान् पितृन् मन्यन्ते"[93] इति। 'स हि तेषां राजेति' इति च तत्र दुर्गाचार्यस्य वृत्तौ द्रष्टव्यम्। "परेयिवासं प्रवतो महीरनु" इत्यादिसूक्तद्वये[94] यमस्य पितृराज्ञं पितृणां स्वरूपञ्च सुव्यक्तमिति विदुषां मतम्। किञ्चिद्विशेषतोऽप्युक्तम् ऐतरेयालोचने[95] यावत्।

ईश्वरशब्दार्थस्तु एकत्र मन्त्रे द्विविध उपन्यस्तः। तद्यथा- "ईश्वरः सर्वेषां भूतानां गोपायिताऽऽदित्यः" इति; "ईश्वरः सर्वेषामिन्द्रियाणां गोपायिताऽऽत्मा"[96] इति च। यद्यपि जडात्मकस्य आदित्यस्य चैतन्यात्मकस्य जीवात्मनश्च ईश्वरत्वम् उपात्तम्। तथापि तयोर्जडाजडयोराश्रयतया जीवकतया शक्तिप्रदत्वेन च एतद्विलक्षणोऽपि कश्चिदस्तीति गम्यत एव। स एव परमेश्वर इति ; परमात्मा इति ; परब्रह्मेति सर्वैर्गीयते। एवञ्च जगति जडः ; आत्मा ; परमात्मा चेति त्रय एव

---

[93] निरुक्तम् ११।२।५-६

[94] ऋक्संहिता १०।१४-१५

[95] ऐतरेयालोचनम् सं० २ पृ० ८९-९१

[96] निरुक्तम् ३।२।६

मूलपदार्था इत्येव निष्पन्नम्। वस्तुतः अस्य हि परमात्मनो विशेषनामरूपाभावात् सर्वाश्रयत्वात् सर्वव्यापकत्वात् सर्वान्तःस्थायि-रक्षकत्वाच्च सर्वरूपैः सर्वनामभिश्चोपास्यत्वम् एव आर्यसम्मतम्। अत एव यथाप्रयोजनं जडस्याजडस्य च स्तुतिरुपपद्यते। अत एवैवं श्रूयते- "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः"[97] इति। तद्व्याख्याने चापि- "एकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्"[98] इति।

पुरुषशब्दव्याख्यानावसरेऽपि औपनिषदं ब्रह्मज्ञानमपि किञ्चिदत्र प्रदर्शितम्। तथा हि "पुरुषः = पुरुषादः ; पुरिशयः ; पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य-

**यस्मात्परं नापरमस्ति किञ्चिद्-**

**यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्।**

**वृक्ष इव स्कन्धो दिवि तिष्ठत्येकम्**

**तेनेदं पूर्णं पुरुषेण सर्वम्॥** इत्यपि निगमो भवति।"[99] इति।

एष एव मन्त्रः श्वेताश्वतरोपनिषद्यपि[100] दृश्यते। वस्तुतः श्वेताश्वतरसंहितात एव उद्धृतोऽयं निगम इति यास्केनात्र निरुक्ते प्रदर्शितः।

---

97 ऋक्संहिता १।१६४।४६

98 निरुक्तम् ७।४।५

99 निरुक्तम् २।१।५

100 श्वेताश्वतरोपनिषत् ३।९

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

परन्तु नात्र यास्कस्य क्वचिदपि मन्त्रातिरिक्तस्य निगमत्वेनाख्यानम् भवतीति यावत्। एते तु देवतासम्बद्धाः विषयाः अस्मिन् अध्याये केवलस्थूलावलोकनाय अंशीभूता एव प्रदर्शिताः भवन्ति। विस्तारेण वादप्रतिवादरूपेण अग्रगेषु अध्यायेषु निरूपयन्ति।

## निरुक्ते विज्ञानांशाः

अत्र विज्ञानान्यपि प्रसङ्गतो बहूनि प्रदर्शितानि। तानि यथा- "षड्भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति। जायत इति पूर्वभावस्यादिमाचष्टे ; नापरभावमाचष्टे ; न प्रतिषेधति। अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्। विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम्। वर्द्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा। अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्। विनश्यतीत्यपरभावस्यादिमाचष्टे ; न पूर्वभावमाचष्टे न प्रतिषेधति। अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह। ते यथावचनमभ्यूहितव्याः"[101] इति भावविज्ञानम्।

एवमेव- "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृती भाष्यन्ते दमूनाः क्षेत्रसाधा इति ; अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति ; अथापि प्रकृत एवैकेषु भाष्यन्ते विकृतय एकेषु ; श्वतिर्गतिकर्म्मा कम्बोजेष्वेव

---

[101] निरुक्तम् १।१।३-४
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

भाष्यते" इत्यारभ्य "विकारमप्यार्येषु शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु"[102] इत्येतत्पर्यन्तम् भाषाविज्ञानम् प्रदर्शितम्।

तथैव "साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"[103] इति वेदवेदाङ्गाद्युत्पत्तिविज्ञानम्।

तथा हि- "पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे"[104] इति प्रसङ्गतः समासतो वेदफलविज्ञानम्।

एवं "नाकः = कमिति सुखनाम ; तत्प्रतिषिद्धं प्रतिषिध्येत। 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्' (लुप्तशाखीयमन्त्रः)। न वा अमुं लोकं जग्मुषे किञ्च नासुखम् ; पुण्यक्तो ह्येव तत्र गच्छति"[105] इति स्वर्गविज्ञानम्।

एवमेव "नरकं = न्यरकं ; नीचैर्गमनं ; नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा"[106] इति नरकविज्ञानम्।

अपि च "एकः इता सङ्ख्या ; द्वौ द्रुततरा सङ्ख्या ; त्रयस्तीर्णतमा सङ्ख्या ; चत्वारश्चलिततमा सङ्ख्या ; अष्टावश्नोतेः ; नव न वननीयानावाप्ता वा ; दश

---

102 निरुक्तम् २।१।३-४

103 निरुक्तम् १।६।५

104 निरुक्तम् १।१।२

105 निरुक्तम् २।४।२

106 निरुक्तम् १।३।६

दस्ता दृष्टार्था वा ; विंशतिर्द्विदशतः ; शतं दशदशतः ; सहस्रं सहस्वद् ; अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् ; अर्बुदो मेघो भवत्यरणमम्बु तद्दोऽम्बुमद्भवतीति वा ; स यथा महान् बहुर्भवति वर्षंस्तदिवार्बुदम्"[107] इति। "पञ्च पृक्ता सङ्ख्या"[108] इति। "सप्त सृप्ता सङ्ख्या"[109] इति च सङ्ख्याविज्ञानम्।

एवमेव द्वादशादित्याहोरात्रादिकालांशविज्ञानं यथा अत्रैव दृश्यते यथा-"तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति"[110] इत्याद्युक्तः प्रथम आदित्यः।

"भगः ; तस्य कालः प्रागुत्सर्पणात्" इत्याद्युक्तिर्द्वितीयः।

"सूर्यः ; सर्त्तेर्वा सुवतेर्वा स्वीर्यतेर्वा" इत्याद्युक्तस्तृतीयः। 'स पुनरयं भगकालात् सृतः सूर्यो भवति' इति तत्र दौर्गीवृत्तिः।

"अथ यद्रश्मिशेषोषं पुष्यति ; तत् पूषा भवति" इत्याद्युक्तश्चतुर्थः।

"अथ यद् विषितो भवति ; तद्विष्णुर्भवति" इत्याद्युक्तः पञ्चमः।

"विश्वानरः [प्रत्यृतः सर्वाणि भूतानि]"[111] इत्याद्युक्तः षष्ठः।

"वरुणः [वृणोतीति सतः]"[112] इत्याद्युक्तः सप्तमः।

---

107 निरुक्तम् ३।३।४

108 निरुक्तम् ३।२।२

109 निरुक्तम् ४।४।५

110 निरुक्तम् १२।२।१

111 निरुक्तम् ७।६।१

112 निरुक्तम् १०।१।३

"केशी ; केशा रश्मयस्तद्वान्" इत्याद्युक्तोऽष्टमः।

"अथ यद्रश्मिभिरभिकम्पयन्नेति" इत्याद्युक्तः वृषाकपिर्नवमः। 'वर्षिता चावश्यायानां कम्पनञ्च भूतानाम्' इति तद्वृत्तिः।

"यमः [यच्छतीति सतः]"[113] इत्याद्युक्तो दशमः।

"अज एकपाद् ; अजनः एकः पादः ; एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा:" इत्याद्युक्त एकादशः।

"समुद्रः [सम्मोदन्तेऽस्मिन् भूतानि]"[114] इत्याद्युक्तो द्वादशः। तदेवमेकस्यैव सूर्यस्य अहोरात्रकालविभाजकत्वेन सवित्रादीनि द्वादशनामानीत्युक्तं कालविज्ञानम्।

"शिर आदित्यो भवति ; यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति। इदमपीतरच्छिर एतस्मादेव। समाश्रितान्येतदिन्द्रियाणि भवन्ति"[115] इति आदित्यस्थितिविज्ञानम्।

एवमेव "तत्सूर्यस्य देवत्वं तन्महिमत्वम् ; मध्ये यत् कर्मणां क्रियमाणानां विततं संह्नियते। यदासावयुक्तहरणानादित्यरश्मीन् हरितोऽश्वानिति वा। अथ रात्री वासस्तनुते सिमस्मै ; वेसरमहरवयुवती

---

[113] निरुक्तम् १०।२।६

[114] निरुक्तम् २।३।१

[115] निरुक्तम् ४।२।५

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

सर्वस्मादपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति"[116] इति सौराकर्षणविज्ञानम् रात्रिविज्ञानञ्च।

तथा च "यद्वर्षन् पातयत्युदकं रश्मिभिस्तत् प्रत्यादत्ते"[117] इति ; "रश्मिर्यमनात्"[118] इति रश्मिविज्ञानम्।

"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीयते। तदेतेनोपेक्षितव्यम्। आदित्यतोऽस्य दीप्तिर्भवतीति। 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः'[119] इत्यपि निगमो भवति ; सोऽपि गौरुच्यते ; 'अत्राह गोरमन्वत'[120] इति। अत्र ह गोः समसंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगत-मपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे"[121] इति ज्योत्स्नाविज्ञानम्।

एवं "नाक आदित्यो भवति ; नेता भासं ; ज्योतिषां प्रणयः"[122] इति अहन्यन्यज्योतिर्दर्शनहेतुविज्ञानम्।

तथा च "**सप्त युञ्जन्ति रथमेकचक्रम्**

**एको अश्वो वहति सप्तनामा।**

**त्रिनाभिचक्रमजरमनर्वं**

---

116 निरुक्तम् ४।२।३

117 निरुक्तम् ५।३।७

118 निरुक्तम् २।५।१

119 वाजसनेयिसंहिता १८।४०

120 ऋक्संहिता २८४।१५

121 निरुक्तम् २।२।२ ; ४।४।४

122 निरुक्तम् २।४।२
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**यत्रेमा विश्वा भुवनानि तस्थुः ।।"** इति ऋक्संहिता[123]। एवमेव निरुक्ते यास्कोऽप्याहैवं- सप्त युञ्जन्ति रथम् 'एकचक्रम्' एकचारिणम् ; 'एको अश्वो वहति सप्तनामा' आदित्यः ; सप्तास्मै रश्मयो रसानभिसन्नामयन्ति ; संवत्सरप्रधान उत्तरोर्द्धर्चः। 'त्रिनाभिचक्रं' त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति। 'अजरम्' अजरणधर्माणम् ; 'अनर्वम्' अप्रत्यृतमन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते"[124] इत्यादिः सौरजगद्विज्ञानम्।

एवम् "अन्तरिक्षं कस्मात् ? अन्तरा क्षान्तम् भवति ; अन्तरेमे इति वा; शरीरेष्वन्तरक्षयमिति वा"[125] इति ; "पुष्करमन्तरिक्षं पोषति भूतानि"[126] इति च अन्तरिक्षविज्ञानम्।

एवञ्च "ऋत्वीसमपगतभासमपहृतभासमन्तर्हितभासं गतभासं वा"[127] इति। "प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेति ; अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः"[128] इति च पृथिवीविज्ञानम्।

---

[123] ऋक्संहिता १।१६४।२

[124] निरुक्तम् ४।४।६

[125] निरुक्तम् २।३।१

[126] निरुक्तम् ५।३।७

[127] निरुक्तम् ६।६।७

[128] निरुक्तम् १।४।३

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

एवमेव "आपः आप्नोतेः"[129] इति। "आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् ; अस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः"[130] इति च अब्विज्ञानम्।

तथापि "तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यन्ते। समुद्रः कस्मात्? समुद्द्रवन्त्यस्मादापः ; समभिद्रवन्त्येनमापः ; सम्मोदन्तेऽस्मिन् भूतानि समुदको भवति ; समुनत्तीति वा तयोर्विभागः। तत्रेतिहासमाचक्षते- देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यो भ्रतरौ बभूवतुः"[131] इत्युदधिविज्ञानम्।

एवं हि "उर्वश्यप्सरा। उर्वभ्यश्नुतेः। अप्सरा अप्सारिणी ; अपि वाऽप्स इति रूपनाम। 'द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त'[132]" इत्यादि विद्युद्विज्ञानम्।

तथा च "विद्युन्न या पतन्तो" इत्यारभ्य "प्रोर्वशीतिरते दीर्घमायुः" इति पर्यन्तं ऋक्संहितायां[133] दृश्यत एव। अस्या ऋचः व्याख्याने यास्केनैवमुक्तम्- "अथोर्वशी प्रवर्द्धते दीर्घमायुः"[134] इति। 'उर्वशी' मेघोत्था

---

[129] निरुक्तम् ९।६।५

[130] निरुक्तम् २।५।१-२

[131] निरुक्तम् २।३।१

[132] ऋक्संहिता ७।३३।१

[133] ऋक्संहिता १०।९६।१०

[134] ऋक्संहिता ११।४।२
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

'विद्युन्न' विद्युदिव ; शरीरवैद्युतिकशक्तिः- (जीवनी शक्तिः) 'प्रतिरते' प्रवर्द्धयते 'दीर्घमायुः' इति तदर्थः फलति। तदिदं शरीरविद्युद्विज्ञानम्।

एवं तत्र वृष्टिविज्ञानम्- "विकर्त्तनेन मेघानामुदकं जायते" "द्वावृबूकं वहतः पुरीषम् वाय्वादित्या उदकम्"[135] इति दृश्यते।

एवमेव "'क्व स्विदस्याः (माध्यमिकाया वाचः) परमं जगाम?'[136] इति। यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा"[137] इति। एतदेव अत्र उदकमानसाम्यविज्ञानमिति स्फुटम् बोधितम्।

तथा हि "'त्रयस्तपन्ति पृथिवीमनूपाः'[138] इति। पर्जन्यो वायुरादित्यः ; शीतोष्णवर्षैरोषधीः पाचयन्ति। 'अनूपाः' अनुवपन्ति लोकान्त्स्वेन स्वेन कर्मणा"[139] इति च अन्नोत्पत्तिविज्ञानम्।

एवञ्च "अयमप्यग्निरोजसा बलेन मथ्यमानो जायते ; तस्मादेनमाह सहसस्पुत्रं सहसो यहुम्"[140] इति पार्थिवाग्निविज्ञानम्।

"'ससं न पक्वमविदच्छुचन्तम्'[141]। स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम् तदिवाविदज्ज्वाज्वल्यमानम्। 'द्विता च सत्ता स्वधया च

---

[135] निरुक्तम् २।६।५

[136] ऋक्संहिता ८।१००।१०

[137] निरुक्तम् ११।३।७

[138] ऋक्संहिता १०।२७।२३

[139] निरुक्तम् २।६।५

[140] निरुक्तम् ८।१।३

[141] ऋक्संहिता १०।३६।३
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

शम्भुः’[142]। द्वैधं मध्यमे च स्थाने उत्तमे च। ‘शम्भुः’ सुखभूः"[143] इति माध्यमिकाग्निविज्ञानम्।

**"हिमेनाग्निं घ्रंसमवारयेथाम्**

**पितुमतीमूर्ज्जमस्मा अधत्तम्।**

**ऋबीसे अत्रिमश्विनावनीतम्**

**उन्निन्यथुः सर्वगणं स्वस्ति ।।"**[144] इति।

हे ‘अश्विनौ!’ युवां ग्रीष्मन्ते ‘हिमेन’ वर्षशैत्येन ; ‘घ्रंसम्’ अहोऽनुभूतम् ‘अग्निं’ तापम् ‘अवारयेथाम्’ ; ‘पितुमतीम्’ अन्नवतीं च ‘ऊर्ज्जम्’ ‘अस्मै’ अग्नये ‘अधत्तम्’ ; योऽयम् ‘ऋबीसे’ पृथिव्याम् अग्निः अन्तरौषधिवनस्पतिश्चप्सु तम् ‘सर्वगणं’ सर्वनामानं ‘अत्रिम्’ अग्निम् ‘उन्निन्यथुः’। ‘स्वस्ति’ स्वस्त्ययनायास्य जगतः। "यद्वृष्ट ओषधय उद्यन्ति प्राणियश्च पृथिव्याम् ; तदश्विनो रूपम्। तेनैतौ स्तौति"[145] इत्यश्विनाम् अहोरात्रहेतुसौराग्निविज्ञानम्।

"अयमेवाग्निर्वैश्वानर इति शाकपूणिः। विश्वानरावित्यप्येते उत्तरे ज्योतिषी। वैश्वानरोऽयं यत्ताभ्यां जायते। कथां त्वयमेताभ्यां जायते? इति।

---

[142] ऋक्संहिता ३।१७।५

[143] निरुक्तम् ५।१।३

[144] ऋक्संहिता १।११६।८

[145] निरुक्तम् ६।६।८
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवति उदकेन्धनः शरीरोपशमनः। उपादीयमान एवायं सम्पद्यते। उदकोपशमनः शरीरदीप्तिः। अथादित्यात्। उदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं परिसृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत्प्रदीप्यते सोऽयमेव सम्पद्यते। अप्येते उत्तरे ज्योतिषी अग्नी उच्येते"[146] इति च वैश्वानराग्नि- विज्ञानम्।

"योऽनिध्मो दीप्यतेऽभ्यन्तरमप्सु"[147] इति अपान्नपान्नामजस्वा-न्तर्वर्त्तिवाध्यीभूताग्नेः विज्ञानम्।

"अथास्य कर्म ; वहनञ्च हविषामावाहनञ्च देवतानां यच्च किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत्"[148] इति पार्थिवाग्निकर्मविज्ञानम्।

"अथास्य कर्म ; रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्"[149] इतीन्द्र(वायु)कर्मविज्ञानम्।

"अथास्य कर्म ; रसादानं रश्मिभिश्च रसधारणं यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत्"[150] इति आदित्यकर्मविज्ञानम्।

---

[146] निरुक्तम् ७।४।३ ; ७।६।६-७

[147] निरुक्तम् १०।२।७

[148] निरुक्तम् ७।३।१

[149] निरुक्तम् ७।३।३

[150] निरुक्तम् ७।३।४

"अदितिरदीना देवमाता"[151] इति। ततः "दक्षस्य वादिते जन्मनि व्रते राजानामित्रावरुणाविवाससि। अतूर्तपन्था पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु"[152] इति अदितिशब्दस्य निगमं प्रदर्श्य तद्व्याख्यायाम् आह- "अथो 'अर्यमा' आदित्योऽरीन् नियच्छति ; 'सप्तहोता' सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वा ; 'विषुरूपेषु' विषमरूपेषु ; 'जन्मसु' कर्मसु उदयेषु। आदित्यो दक्ष इत्याहुः ; आदित्यमध्ये च स्तुतोऽदितिर्दाक्षायणी" इति। पुनः "अदितेर्दक्षोऽजायत दक्षाद्वादितिः परि"[153] इति च मन्त्रव्याख्याने- "तत्कथमुपपद्यते ? समानजन्मानौ स्यातामिति ; अपि वा देवधर्मैश्चेतरेतरजन्मानौ स्याताम् ; इतरेतरप्रकृतौ"[154] इति। तदिदमेव बीजाङ्कुरन्यायतम् सृष्टिविज्ञानम्।

तदेवं "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुते मां"[155] इति निगमस्य व्याख्याने तु- "हिरण्यगर्भो हिरण्मयो गर्भोऽस्येति वा ["हिरण्यं कस्मात्? ह्रियत आयम्यमानमिति वा ; ह्रियते जनाज्जनमिति वा ; हितरमणं भवतीति वा ; हर्य्यतेर्वा स्यात्

---

[151] निरुक्तम् ४।४।१

[152] ऋक्संहिता १०।६५।५

[153] ऋक्संहिता १०।२।४

[154] निरुक्तम् ११।३।२

[155] ऋक्संहिता १०।१२१।१

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

प्रेप्साकर्मणः"[156] इति] समभवदग्रे भूतस्य जातः पतिरेको बभूव। स धारयति पृथिवीं च दिवं च"[157] इति तत्रैव सौराकर्षणविज्ञानम् द्रष्टुं शक्यते।

"सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामहंहत्। अश्वमिवाधुक्षद्धुनिम-न्तरिक्षमतूर्ते बद्धं सविता समुद्रम्"[158] इति निगमस्य व्याख्यानावसरे तु- "सविता यन्त्रैः पृथिवीमरमयदनारम्भणे अन्तरिक्षे सविता द्यामहंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वात्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यत्। आदित्योऽपि सवितोच्यते"[159] इति च तत्र पृथिव्यादिभ्रमणविज्ञानम् द्रष्टुं लभते।

एवं तत्र- "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा ; यो देवः सा देवता"[160] इति ‘ "देवा न आयुः प्रवर्द्धयन्तु चिरञ्जीवनाय"[161] इत्यस्य व्याख्यायां "विश्वेदेवाः = सर्वे देवाः" इत्यादि ; "रश्मयोऽत्र देवा उच्यन्ते। य एतस्मिन्नधिनिषस्मा इत्यधिदैवतम् ; अथाध्यात्मम्। इन्द्रियाण्यत्र देवा उच्यन्ते"[162] इति च देवविज्ञानम् बोधितम्।

---

156 निरुक्तम् २।३।१

157 निरुक्तम् १०।२।१०

158 ऋक्संहिता १०।१४९।१

159 निरुक्तम् १०।३।८

160 निरुक्तम् ७।४।२

161 ऋक्संहिता १।८९।२

162 निरुक्तम् १३।१।११
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

"अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः"[163] इत्यस्य निगमस्य व्याख्याने तु "माध्यमिको देवगण इति नैरुक्ताः ; पितर इत्याख्यानम्"[164] इति च तत्र पितृविज्ञानम्।

**"सप्त ऋषयः प्रतिहिताः शरीरे**

**सप्त रक्षन्ति सदमप्रमादम्।**

**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो**

**अस्वप्नजौ सत्रसदौ च देवौ"**[165] इति।

अत्र "सप्त ऋषयः प्रतिहिताः शरीरे ; रश्मय आदित्ये। सप्त रक्षन्ति सदमप्रमादं ; संवत्सरमप्रमाद्यन्तः। सप्तानास्त एव स्वपतो लोकमस्तमितमादित्यं यन्ति। तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ ; वाय्वादित्यावित्यधिदैवतम्" इति व्याख्याय पुनरन्यविधं च व्याख्यातम्- "अथाध्यात्मम्। सप्त ऋषयः प्रतिहिताः शरीरे ; षडिन्द्रियाणि विद्या सप्तम्यात्मनि। सप्त रक्षन्ति सदमप्रमादं ; शरीरमप्रमद्यन्ति। सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्तो ; तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ ; प्राज्ञश्चात्मा तैजसश्च

---

[163] वाजसनयिसंहिता १९।५०

[164] निरुक्तम् ११।२।७

[165] वाजसनेयिसंहिता ३४।५५

इत्यात्मगतिमचष्टे"[166] इति च तत्र वाय्वदित्यशक्तिविज्ञानं द्विविधात्मविज्ञानञ्च तत्रैवाचष्टे।

"तेषामेषामपरा भवति तिर्यग्विलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम्। अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः" इति। अत्रापि व्याख्यावसरे- "तिर्यग्विलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन् यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहेन्द्रियाणि ; यान्यस्वगोपृणि महतो बभूवुरित्यात्मगतिमाचष्टे" इति। सप्तग्रहसम्बन्धाद्रश्मीणां सप्तत्वम्। चन्द्राणामुपग्रहत्वात् ग्रहग्रहणेनैव ग्रहणं च सिद्ध्यति। तदिदं सूर्यस्य सप्तग्रहबन्धनत्वविज्ञानमात्मनश्च सप्तेन्द्रियबन्धनत्वविज्ञानम्।

एवं "**द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति**"[167] इति।

अत्र त्वेतन्निरुक्तम् "द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ ; दुष्कृतं पापं परिसारकमित्याचक्षते। सुपर्णा सयुजा सखायेत्यात्मानं दुरात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं रक्षशरीरं वृक्षं पक्षौ प्रतिष्ठापयति। तयोरन्यद्भुक्त्वान्नमनश्नन्नन्याम् सरूपतां सलोकतामश्नुते य एवं विद्वान्मनश्नन्नन्योऽभिचाकशीतीत्यात्मगतिमाचष्टे"[168] इत्यात्मद्वयविज्ञानम्।

---

166 निरुक्तम् १२।४।३

167 ऋक्संहिता १।१६४।२०

168 निरुक्तम् १३।४।२

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**"हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सुखायः।**

**अत्राहत्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ।।"**[169] इति।

अत्र तु निर्वचनावसरे "हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानाख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभि-रूहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा"[170] इति तत्र ब्रह्मविज्ञानम्।

वस्तुतः निरुक्तप्रणयनकालेऽपि तदानीन्तनविपश्चितां हृदयेषु एवं वैज्ञानिकभावा देदीप्यमाना आसन्। यत्-

**"समानमेतदुदकमुच्चैत्यव चाहभिः।**

**भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ।।"**[171] इति।

एषा तु ऋक् यास्केन न व्याख्याता। परं तत्रैव "निगदव्याख्याता"[172] इत्युक्तं वर्तते। निगदेनोच्चारणकालेनैव व्याख्याता अधिगतेति ; किं मदीयविशेषव्याख्यानेनेति यास्कस्य तद्भावः प्रतीयते।

---

[169] ऋक्संहिता १०।७१।८

[170] निरुक्तम् १३।१।१३

[171] ऋक्संहिता १।१६४।५१

[172] निरुक्तम् ७।६।९
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

# निरुक्ते दार्शनिकविषयाः

'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्' इति च नैगमप्रदर्शनेन भगवता यास्केन प्रज्ञापितम्। तद्यथा-

**"ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः।**

**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ।।"**[173]

इति। एतद्व्याख्यायां तु निरुक्ते- "ऋचो अक्षरे परमे व्यवने यस्मिन् देवा अधिनिषण्णाः सर्वे ; यदूत्तद्विदुस्त इमे समासत इति विदुष उपदिशति कतमत्तदेतदक्षरम् ? ओमित्येषा वागिति शकपूणिर्ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेषु। एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रतीति च ब्राह्मणम्"[174] इति।

मन्त्रेषु श्रुतानां रूपकाख्यानां प्रकृतार्थग्रहणनिर्दर्शनानि चेह बहून्याख्यातानि। तद्यथा-

**"अपागूहन्नमृताम् मर्त्येभ्यः कृत्वी सवर्णा मदद्दुर्विवस्वते।**

**उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरस्यूः॥"**[175] इति।

अस्य तु निरुक्तिरेवं- "अप्यगूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णा मदद्दुर्विवस्वतेऽप्यश्विनावभरद्यदासीदजहाद् द्वौ मिथुनौ सरस्यूः। मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः ; यमं च यमीं चेत्यैतिहासिकाः।

---

[173] ऋक्संहिता १।१६४।३९

[174] निरुक्तम् १३।१।१०

[175] ऋक्संहिता १०।१७।१-२

तत्रेतिहासमाचक्षते- त्वाष्ट्री सरस्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार। सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव ; स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव ; ततोऽश्विनौ जज्ञाते ; सुवर्णायां मनुः" इति दृश्यते। एवं तदभिवादिनी एषा ऋग्भवति-

**"त्वष्टा दुहित्रे वहतुं वृणोततीदं विश्वं भुवनं समेति।**

**यमस्य माता पर्युह्यमानामहो जाया विवस्वतो ननाश** ।।"[176] इति।

मन्त्रद्वयश्रुतस्यास्य कल्पितोपाख्यानस्य बीजञ्चाहैतत् "रात्रिरादित्यस्य। आदित्योदयेऽन्तर्धीयते"[177] इति निरुक्तिः।

सामाजिककर्तव्योपदेशायाम्नातस्य कल्पितोपाख्यानस्य तत्त्वनिर्णयाय तत्तन्निगूढव्याख्याप्रकाशे यत्नो यद्यपि यास्कस्य न दृश्यते। परं तत्कृतात् तत्तत्कल्पनाबीजनिर्देशादेव तत्तन्निगूढार्थोऽपि स्फुटं प्रतीयते। तादृशकल्पितोपरव्यानस्य कल्पिततत्वबोधने यत्नो धीमत्सु अप्रयोजनीय इत्येव तत्र तदुपेक्षाबीजम्। अस्त्येकं सूक्तं चतुर्दशर्गात्मकं दाशतय्या दशमे मण्डले दशमम्। तत्सर्वमेव सायणाचार्येण यमयमीसंवादपरं व्याख्यातम् ; अत एव तन्नामतः प्रसिद्धञ्च तत्सम्प्रति। अस्मन्मते तु तत्सूक्तीयाः कतिचिदेवर्चो यमयमीसंवादपराः ; नैव सर्वाः। तस्य सूक्तस्य तिस्त्र ऋच इह निरुक्ते[178] त्रिषु उद्धृताः। ता इमाः-

---

[176] ऋक्संहिता १०।१७।२

[177] निरुक्तम् १२।१।१०-११

[178] निरुक्तम् ४।३।४ ; ६।५।५ ; ११।३।१३

**"आ घा ता गच्छानुत्तरा युगाणि ; यत्र जामयः कृणवन्नजामि।**
**उप बर्बृहि वृषभाय बाहुम् अन्यमिच्छस्व सुभगो पतिं मत्॥**

**बतो बतासि यम नैव ते मनो हृदयञ्चाविदाम।**
**अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम्॥**

**अन्यमूषुत्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम्।**
**तस्य वा त्वं मन इच्छा स वा तवाथाकृणुष्व संविदं सुभद्राम् ॥"**

इति। यास्कः अत्रोपसंहारमन्त्रमाह "यमी यमं चकमे तां प्रत्याचचक्षे-त्याख्यानम्"[179] इति। यमपदार्थनिर्णये तु यास्केनोक्तम् "यमो यच्छतीति सतः ; अग्निरपि यम उच्यते"[180] इति। "अग्निर्वाव यमः इयं (पृथिवी) यमी"[181] इति च तैत्तिरीय-संहिता। शतपथे[182] चापि ब्राह्मणे एवं दृश्यत एव। एवञ्च इह पृथिव्याम् अग्नेः सर्वदा सर्वत्र विद्यमानत्वेन भ्रातृभगिनीभावस्त्वनयोर्मन्तव्यः न तु दाम्पत्यभावः। सति हि दाम्पत्यभावे अग्नेरालिङ्गनेन सर्वा पृथिवी विदह्येतैव। अतोऽग्निना प्रत्याख्याता पृथिवी पर्जन्येन विवाहिता। तदेव ऋचि श्रूयते- "पिता दुहितुर्गर्भमाधात्"[183] इति।

---

[179] निरुक्तम् ११।३।१३

[180] निरुक्तम् १०।२।६-७

[181] तैत्तिरीयसंहिता ३।३।८।३

[182] शतपथब्राह्मणम् ६।२।१।१०

[183] ऋक्संहिता १।१६४।३३

तत्र यास्केनोक्तम्- 'पर्जन्यः पृथिव्याः'[184] इति। पिता = पालयिता ; दुहिता= दूरे हिता ; पर्जन्यकर्तृकं वृष्टं रेतः = उदकं ; पृथिवीकर्तृकं तस्य धारणं ; ततश्चौषध्याद्युत्पत्तिः प्रत्यक्षमेव। यच्चात्र श्रूयते 'उत्तरा युगानि' इति। तत् प्रलीनकालीनानि बोध्यानि। प्रलीनकालस्य च एतत्कालसाम्यं मन्तव्यम्। किन्तु अहोरात्रयोः कालसाम्यादिदर्शनात्। तत एव मनुराह 'तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः। रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः॥'[185] इति।

निरुक्तस्य द्वितीयपरिशिष्टे तु बहवो दार्शनिकभावाश्च विद्यन्ते। तद्यथा- "आकाशगुणः शब्दः"[186] इत्येवमादयः।

तत्रापि सङ्ख्यानामादरातिशयो गम्यते। "अथैष महानात्मा त्रिविधो भवति- सत्त्वं रजस्तम इति"[187] इत्येवमादयो द्रष्टव्याः।

तत्रैव पुनर्जन्म विवेकश्चाख्यातः। तत्र च साङ्ख्ययोगमिति स्पष्टमभिहितम्। "मृतश्चाहं पुनर्जातः" इत्यादि ; "शुभाशुभं कर्मैतच्छरीरस्य प्रमाणम्"[188] इत्यन्तञ्च द्रष्टव्यम्।

---

[184] निरुक्तम् ४।३।५

[185] मनुसंहिता १।७३

[186] निरुक्तम् १३।२।४

[187] निरुक्तम् १३।२।३

[188] निरुक्तम् १३।२।६

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

तत्रैव शारीरिकतत्त्वानि च कानिचिदभ्युक्तानि। "अष्टोत्तरं सन्धिशमष्टाकपालं शिरः सम्पद्यते षोडश कपालानि नव स्नायुशतानि"[189] इत्येवमादीनि द्रष्टव्यानि।

**"ब्रह्मा देवानां ; पदवीः कवीनाम् ; ऋषिर्विप्राणां ; महिषो मृगाणाम्। श्येनो गृध्राणां ; स्वधितिर्वनानां ; सोमः पवित्रमत्येति रेभन्॥**"[190] इति। अस्य मन्त्रस्य परिशिष्टकृता द्विविधं व्याख्यानमकारि। तद्यथा- "एष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनाम्" इत्यारभ्य "इत्यधिदैवतम्। अथाध्यात्मम्- अयमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणाम् ; आत्मगतिमाचष्टे"[191] इति। ऋक्संहितायां ब्रह्मवर्णनञ्च निगमप्रदर्शनेन कृतम् यथा-

**"न तं विदाथ इमा जजानान्यद्युष्माकमन्तरं बभूव।**

**नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥**"[192] इति।

निरुक्ते- "न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिमन्यद् युष्माकमन्तरमन्यदेषामन्तरं बभूवेति। नीहारेण प्रावृतास्तमसाजस्वप्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्ति। अविद्वांसः क्षेत्रज्ञमनुप्रवदन्ति। अथाहो विद्वांसः

---

189 निरुक्तम् १३।२।७

190 ऋक्संहिता ९।९६।७

191 निरुक्तम् १३।२।१३

192 ऋक्संहिता १०।८२।७
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

क्षेत्रज्ञोऽनुकल्पते। तस्य तपसा सहाप्रमादमेत्यथाप्तव्यो भवति। तेनासन्ततमिच्छेत्तेन सखमिच्छेदेष हि सखा श्रेष्ठः संज्ञानातिभूतं भवद्भविष्यदिति। ज्ञाता कस्माज्ज्ञायतेः सखा कस्मात्सख्यतेः सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयतीति। तस्य यदापः प्रतिष्ठाशीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतः"[193] इति व्याख्या दृश्यते।

मोक्षविज्ञानात्मपरमपुरुषार्थाख्यानेन अतिमधुरेण परिशिष्टञ्च उपसंहृतम्। तद्यथा- "देवानां नु वयं जाना" इति ; "नासदासीन्नो सदासीत् तदानीम्"[194] इति च। "सैषात्मजिज्ञासा ; सैषा सर्वभूतजिज्ञासा ; ब्रह्मणः सारिष्टं सरूपतां सलोकतां गमयति य एवं वेद"[195] इति च व्याख्या दृश्यते।

अथात्र किञ्चिद् ब्रूमः। यदुक्तं पुरस्तात् "सरूपतां सलोकतामश्नुते य एवं विद्वान्" इति ; तत्तात्पर्यं त्वेवं स्यात्- यः = पुरुषः एवं विद्वान् "द्वा सुपर्णा सयुजा"[196] इत्यस्य मन्त्रस्यार्थविद् भवति ; स नूनं जीवात्मपरमात्मयोरुभयोरेव चैतन्यत्वेनैकरूपत्वमवगम्य 'सरूपताम्' आत्मनो ब्रह्मसमानतापत्वम् 'अश्नुते' लभते ; किन्तु उभयोरेव एकवृक्षस्थत्वमवगम्य 'सलोकतां' एकलोकस्थायित्वमपि 'अश्नुते' लभते।

---

193 निरुक्तम् १३।२।१०

194 ऋक्संहिता १०।७२।१-९ ; १२९।१-७

195 निरुक्तम् १३।४।९

196 ऋक्संहित १।१६४।२०

लाभोऽत्र बुद्धिभ्रमाद् ह्रितपदार्थे पुरर्दृष्टिक्षेपज इव। यथा स्वस्कन्धस्थां गात्रमार्जनीमनवेक्षमाणस्य कालान्तरे भवत्येवेति। अथात्र उपसंहारवचने सारिष्टिमित्यधिकं पदं यदस्ति तस्य सार्ष्टिमिति पाठान्तरञ्च अस्त्येव। भागवतटीकायां तु श्रीधरस्वामिना सार्ष्टिपदस्य निर्वाणमिति व्याख्यानमकारि। नित्यस्यात्मनः निर्वाणं तु कदापि न युज्यते। नापि वेदेषु क्वचिदपि श्रुतमस्ति। बौद्धैरेव जीवस्य निर्वाणं प्रथममुपात्तम्। तत एव तत्परजैः भागवतटीकाप्रभृतिप्रणेतृभिः तद्गृहीतम्। तदेवमिह यद्दृश्यते तदर्थकं सार्ष्टिपदम् ; तन्नूनं परतनैः कैश्चित् निवेशितम् ; अथ वा एतद्द्वितीयपरिशिष्टं अनतिप्राचीनमेव स्यादिति अस्माकं मतम्। "जातवेदसे सुनवाम"[197] इति मन्त्रस्य पूर्वोक्तात् निरुक्तव्याख्यानात्[198] परिशिष्टस्थव्याख्यानस्य[199] सर्वथा पार्थक्यप्रतीतेः पौनरुक्तदोषापत्तेः अन्यत्रान्यत्र चेह भाषाव्याख्यानशैल्यादिभेदावगमादिभ्यश्च।

वस्तुतस्तु "द्वा सुपर्णा सयुजा सखाया" इति मन्त्रतो यदधिगतं 'दशमस्त्वमसि' इत्यभियुक्तोक्तिजन्यभ्रमपनोदनतः समुत्पन्नमिव जीवात्मपर-मात्मनोः सायुज्यादिकम् ; पुराणादौ तदेवान्यथोपबृंहितम्। एवं हि यदस्ति पुराणेषु कचित् पञ्चविधस्य क्वचिच्चतुर्विधस्य मोक्षस्य वर्णनम् तत् सर्वमेव बालबोधायैव। तद्यथा भागवते-

---

197 ऋक्संहिता १।९९।१

198 निरुक्तम् ७।५।२

199 निरुक्तम् १३।४।५

**सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत।**

**दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥** इति।

अस्मिन् श्लोके सार्ष्टीति बौद्धशास्त्रप्रसिद्धं निर्वाणम्। तत्तु नित्यस्यात्मनो नैव सम्भाव्यमस्ति ; न च सुखाभिलाषिणामस्माकं प्रार्थनायोग्यम् ; नापि वेदबोधितमित्यश्रद्धेयम्। एकत्वमपि तथैव। सर्वव्यापिनोऽस्य परमेश्वरस्य सर्वलोके सर्वसमीपे च सर्वदा विद्यमानत्वात् सालोकसामीप्ये त्वप्रार्थितेऽपि स्त एव सर्वत्र सर्वेषामस्माकमिति किं तयोः प्रार्थनया। सारूप्यवादस्तु उन्मत्तप्रलाप एव। किन्तु ब्रह्मणः रूपाभावात् असङ्ख्येयत्वप्रसङ्गाच्चेति। तदित्थं सर्वेषामेव वेदवेदाङ्गानां परमपुरुषार्थोपदेश एव चरम उद्देश्य इति सिद्धम्।

## निरुक्ते व्याकरणांशाः

निरुक्तस्य पीठिकायां यास्काचार्यः कांश्चित् व्याकरणांशानपि प्रतिपादितवान्। अस्मादेव अध्ययनात् यास्कस्य काले व्याकरणस्य प्राबल्यमपि ज्ञायते। अस्मिन् निरुक्ते प्रतिपादितास्तु विषयाः प्रातिशाख्यानां पाणिनीयव्याकरणस्य चापि मध्यकालीनाः भवन्ति। समस्तं शब्दप्रपञ्चं यास्कः नामाख्यातोपसर्गनिपाता इति चतुर्धा विभक्तवान्। स च विभागः निरुक्ते[200] एवं दृश्यते- "तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति" इति। तत्रापि विभक्तानां एकैकस्यापि

---

[200] निरुक्तम् १।१।८

लक्षणं प्रतिपादयति। यथा- "भावप्रधानमाख्यातम्" "सत्वप्रधानानि नामानि"[201] इति। एवमुक्त्वा उपसर्गलक्षणप्रतिपादनसमये आचार्यो यास्कः शाकटायनस्य मतरीत्या उपसर्गाणां साक्षादर्थाभिधानशक्तिभावेऽपि नामाख्यातयोः संयोगेन वेशेषार्थं दीयन्ते इति तस्य सुमतं बोधितवान्। एवमुक्त्वा सति नामाख्याताभ्यां वियुक्ता अपि उपसर्गाः तेषामर्थं दीयन्ते इति गार्ग्याचार्यस्य मतमपि निरूपयन्ति। अत्र तु निरुक्ते[202] यास्कः उपसर्गलक्षणप्रतिपादने गार्ग्यस्यैव मतमनुसृतवानिति स्पष्टं दृश्यते। एवं उपसर्गनिपातयोः लक्षणप्रतिपादनसमये यास्कः अनेकान् मन्त्रान् उदाहृत्य तान् शब्दनिर्वचनान् पुष्टीकृतवान्।

यास्को आचार्यः शब्दनित्यत्ववादी भवति। शब्दः नित्यो वा अनित्यो वा इति विचारे शब्दलक्षणे विप्रतिपत्तिं सूचयित्वा यास्कः शब्दानित्यत्ववादनिरासः कृतवान्। तत्रैव शब्दनित्यत्वस्थापनसमये औदुम्बरायणोऽपि नामाख्यातोपसर्गनिपातानां नित्यत्वम् इति

---

201 नामपदस्य इतरेऽपि तेषां शैल्यां लक्षणं प्रतिपादयन्ति- "शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते। तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ इति। एवं त एव इतरे आख्यातस्य वा क्रियापदस्य लक्षणं तेषां मतमनुसृत्यैवमुक्तवन्तः- क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यन्ते। त्रीनत्र पुरुषान् विद्यात् कालतस्तु विशिष्यन्ते इति।

202 "उच्चावचाः पदार्था भवन्तीति गार्ग्यः" (निरुक्तम् १।३।५)। "तद्य एषु पदार्थाः प्राहुः इमे तं नामाख्यातयोः अर्थविवरणम्" (निरुक्तम् १।३।६)। इमे वाक्ये पाणिनेः आष्टाध्याय्यां "उपसर्गाः क्रियायोगे" (अष्टाध्यायी १।४।५९) इत्यनेन सूत्रेण अन्वितुं शक्येते।

प्रतिपादयतीति यास्कः स्वयमेव निरूपितवान्। अपरैः निरुक्तकारैः शब्दनित्यत्वविषये एवमाक्षेपः जातुं शक्यते। स च- उक्तोऽयं चतुर्विधः शब्दः तस्य जननानन्तरं तत्तत् इन्द्रियेषु स्थित्वा विनश्यति। तद्विनाशकारणात् तस्य शब्दस्य अनित्यत्वं सिद्ध्यति। एवमेव नामाख्यातोपसर्गनिपाताः एककाले न उच्चरणीया भवन्ति। एवं स्थिते कथं वा एकेन शब्देन उपसर्गा वा प्रत्ययाः स्वयं संयोजयन्ति ? इति आक्षेपकृतां प्रश्नः। यथा- "अयुगपदुत्पन्नानां वा शब्दनां इतरेतरोपदेशः"[203]; "शास्त्रकृतो योगश्च"[204] इति तत्र निरुक्ते एव वाक्यद्वयं प्रदर्शितम्। अर्थात् शास्त्रे एकेन शब्देन अन्यशब्दात् संयोगो यदि विधीयते तर्हि तत् न समञ्जसमिति आक्षेपकृतां अन्येषां निरुक्तकाराणां वाक्। अतः शब्दः अनित्य एव न तु नित्यः इति ते तेषामभिप्रायं मण्डयन्ति।

यास्कः तमाक्षेपं तस्य वाक्यैरेव निर्मूलयति। तथा हि- "व्याप्तिमत्वात्तु शब्दस्य"[205] इत्यनेन वाक्येन शब्दस्य व्याप्तित्वमुक्त्वा तस्य नित्यत्वं प्रतिपादयति। अर्थात्- पुरुषस्य हृदयान्तर्गतायाः आकाशप्रतिष्ठितायाः बुद्धेः अभिधानाभिधेयभेदेन द्वैविध्यमुक्त्वा यास्कः शब्दस्य नित्यत्वमुच्यते। अनया आकाशप्रतिष्ठितया बुद्ध्या पुरुषः शास्त्राभिमतं प्रयोजनं ज्ञातुं ज्ञापयितुं च स्वप्रयत्नेन उरःकण्ठादिवर्णस्थनेषु

---

[203] निरुक्तम् १।१।२

[204] निरुक्तम् १।२।३

[205] निरुक्तम् १।२।४

शब्दमुत्पादयति। एवं प्रकारेण निष्पादितः शब्दः बहिरागत्य श्रोत्रेन्द्रियात् श्रोतृणां बुद्धिं व्याप्य अविनाश्यं व्यक्तीभावरूपं व्याप्तित्वं सिद्ध्यति। अत एवमुक्तं पदचतुष्टयमर्थं न स्फुरति। एवं रूपमर्थस्फुरणम् अनित्यरूपः नश्वररूपश्च शब्दः न कर्तुं शक्यते। पुरुषोद्भूतः कश्चन शब्दः तत्क्षणे एव नष्टश्चेत् कथं वा इतरेषां बुद्धिं व्याप्य तदर्थं स्फुरयति ? तेनैव कारणेन शब्दः नित्यः इति यास्कः तस्य सुमतं प्रतिपादितवान्।

तस्मिन्नेव निरुक्ते यास्कः सर्वाणि नामपदानि आख्यातजानि वा ? इति विषयमुद्दिश्य विस्तारेण चर्चितवान्। अत्र तद्विषयकचर्चायाम् अभिप्रायद्वयमुक्त्वा सर्वाणि नामानि आख्यातजान्येव इति यास्कः सिद्धान्तितवान्। यथा- "आख्यातजानीति शाकटायनः नैरुक्तसमयश्च"[206] इति। अर्थात् शाकटायनं गार्ग्यं विना इतरे निरुक्तकाराः सर्वाणि नामानि आख्यातजानीति ते अभिप्रयन्ति। एवं तत्रैव निरुक्ते "न सर्वाणीति गार्ग्यो वैय्याकरणानाञ्चैके"[207] इति उक्तम्। अर्थात् गार्ग्यः केचन वैय्याकरणाश्च सर्वे नामशब्दाः न आख्यातजा इति अभिप्रयन्ति। एतदादीनां वादमेवम् अधस्तनरीत्या चिन्तनीयम्-

1. नामपदानि क्रियामनुसृत्य त्रिधा विभक्तुं शक्यन्ते-

    - प्रत्यक्षक्रिया

---

[206] निरुक्तम् १।१२।२

[207] निरुक्तम् १।१२।३

उदा :- हर्ता- हारकः ; पक्ता- पाचकः

- प्रकल्प्यक्रिया

उदा :- गौः, अश्वः, पुरुषः, हस्ती

- अविद्यमानक्रिया

उदा :- डित्थः, डवित्थः, अरविन्दः इति।

उक्तेषु शब्देषु येषु उदात्तादयः स्वराः, प्रकृतिप्रत्ययादिसंस्काराः समर्थिता भूत्वा, नामपदानां रचनाय उपपत्तिः सङ्गत्य लक्षणशास्त्रविहितत्वं च दृश्यते एवं यस्याः क्रियायाः मूलेन यन्नामपदं जायते, यस्याः क्रियायाः गुणः यन्नामपदे दृश्यते तानि नामानि क्रियाजन्यानि इति वक्तव्यम्। परन्तु यत्र प्रकल्प्यक्रिया अविद्यमानक्रिया च प्रकाशिते तत्र न निरुक्तिः कर्तव्या। अत एव सर्वाणि नामानि न आख्यातजानीति यावत्।

2. निर्दिष्टैकक्रियाकर्तॄणां भिन्नानां व्यक्तीनाम् एक एव नामकरणस्य प्रसङ्गः सङ्गच्छते। किन्तु "यः कश्च अध्वानं अश्नुवीत अश्वः सः वचनीयः स्यात्"[208] इति। सर्वेषां नामपदानाम् आख्यातजत्वनिषेधे इदमप्येकं कारणं भवतीति आक्षेपकाराः वदन्ति।

---

[208] निरुक्तम् १।१२।५

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

3. नामधेयप्रतिलम्भाय क्रियैव कारणमित्युक्ते अन्यः दोषः सम्भवति। स च एकस्मिन् द्रव्ये अनेकानां भावानां संयोगेन क्रियावैविध्यमनुसृत्य एकैकस्य द्रव्यस्य नामवैविध्यं सम्भवति। एवं कृते "स्थूणः" इति शब्दं "दरशया" "सञ्जनी" इति निर्वक्तव्यम्। एवं प्रकारेण व्यवहारे अनेकैः क्रियायोगैः अनेकानां नाम्नाम् अप्रसिद्धिः रूढिः दृश्यते।

4. यदि नामानि केवलक्रियापदानाम् अर्थं बोधयन्ति तर्ह्येव तानि आख्यातजानीति वक्तुं शक्यते। "पुरि शयः पुरुषः" इत्येव निरुक्तिः अस्य उदहरणम्। परन्तु एवं रूपनिरुक्तिः सर्वेषां शब्दानां अष्टा[209] इतिवत् जायते। एवमेव तृणमिति पदं तर्दनम्[210] इति च निर्वचनीयम्। परन्तु एवं व्यवहारः रूढौ नास्ति।

5. व्यवहारनिष्पन्नानन्तरं तदभिधानस्य केन धातुना मूलं वक्तव्यमिति चिन्तनं न युक्ततरम्। "पृथिवी" इत्यस्य "प्रथनात् पृथिवी" इति निरुक्तिरुच्यते खलु। कथं वा इदं युक्तम् ? स्वभावतः अपृथिवीमिमां केन वा प्रथनमिति निर्वचनं कृतम् ? अस्य का उपाधिः वर्तते ? तत्र आधारहीनत्वकल्पने पृथिव्यां प्रथनक्रिया न

---

209 अश्नोति हि असौ इति अष्टा

210 तर्द्यते अनेन इति तर्दनम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

सिद्ध्यति। अस्मादपि कारणात् नामपदानि न आख्यातजानीति सिद्ध्यति।

इत्येतेषामाक्षेपाणामनन्तरं यास्कः तस्य निरुक्ते एतानि दुर्भाष्याणि मतानि निरस्य तस्यैव सिद्धान्तं बोधयति। यास्कस्य इमं वादं अधस्तनेन प्रकारेण सङ्गृहीतुं शक्यते।

1. सर्वे शब्दाः क्रियाजन्या एव। तेषां प्रादेशिकविकारज्ञानार्जने प्रयत्नराहित्यं पुरुषापराध एव। न तु शब्दविषयकः दोषः। भिन्नभिन्नदेशेषु भिन्नभिन्नव्याकरणस्य रूढिः वर्तते। निर्वचनसमये तत्तद्भाषासम्बद्धरूढिविषयान् ज्ञात्वा निर्वक्तव्यम्। पुरुषस्य प्रादेशिक-भाषायाः शिक्षणं निर्वचनसामर्थ्यो अयमुपकरोति। अपि तु तस्यैव पुरुषस्य शिक्षणाराहित्येन प्रादेशिकशब्दानां स्वरसंस्कारज्ञानेन वा प्रादेशिकभाषागुणज्ञानमात्रेण शब्दं निर्वक्तुं न शक्यते।

2. एकेन शब्देन अनेकानां धातूनां अर्थसम्भवेऽपि प्रसिद्ध एव अर्थः लोके गृह्यते। तत्र एकं नामपदं कयापि अतिशयया क्रियया एव सम्भवति। इयं तु पद्धतिः व्यवहारानुसृता एव। अनेनपि कारणेन सर्वाणि नामानि आख्यातजानीति न कोऽपि बाधः।

3. शब्दः द्विविधः दृश्यते। स तु प्रतीतार्थः अप्रतीतार्थश्च। शास्त्रम् अप्रतीतार्थं प्रतीतार्थ इव प्रत्यापद्यते। एतदेव शास्त्रस्य वैशिष्ट्यम्। यथास्थितानामेव शब्दानां शास्त्रं तेषां मूलत्वं दीयते। तेन
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

अप्रसिद्धप्रदेशे नामपदानि न आख्यातजानीति वक्तुं न शक्यते। तत्रापि केचन कृत्प्रत्ययान्तशब्दा अपि अल्पप्रयोगेनैव सम्भवन्ति। परन्तु ते सर्वे आख्यातजा एव।

4. पूर्वोक्तस्य पृथिवीशब्दस्य विषये दोषपरिहारार्थं तस्य "पृथुदर्शनात् पृथिवी" इति निर्वचनं कर्तव्यम्।

5. तत्र पदेतरैः अर्थस्फुरणं न कदापि शास्त्रापराधः। तच्च सर्वथा पुरुषापराध एव। एतत्सम्बद्धं निरुक्ते एव एकं वाक्यं दृश्यते- "सैषा पुरुषगर्हा न शास्त्रगर्हा" इति।

एवं प्रकारेण यास्कः पूर्वोक्तान् आक्षेपान् खण्डयित्वा सर्वे शब्दा आख्यातजा एवेति सिद्धान्तितवान्[211]। एतद्रूपे भिन्नाभिप्राये कारणं तु एकैके वेदाङ्गे अनेकप्रभेदबोध एव। निरुक्तकाराणां वैयाकरणानाञ्च मतयोः केषुचन शब्देषु ऐकमत्यं केषुचन शब्देषु वैमत्यमपि वर्तते। शाकटायनादयः सर्वाणि नामपदानि आख्यातजान्येवेति वदन्ति। एते च निर्वचनासम्भवेषु स्थलेषु काशकुशावलम्बनेन आख्यातपदेभ्यः पदेतरेभ्यश्च निर्वचनं बोधयन्ति। एतद्विरुद्धाः निरुक्तकाराः यत्र नामपदानां धातुभिः स्वरसेन निर्वचनं कर्तुं न शक्यते तत्र तद्रूपाः शब्दाः न धातुजा इति कल्पयन्ति। इमं विवादं यास्काचार्यः पूर्वोक्तरूपेण विस्तारेण वर्णितवान्।

---

211 इमम् अंशमुद्दिश्य महाभाष्ये पतञ्जलिरेवमाह- "नाम च धातुजम् आह निरुक्ते व्याकरणे शकटस्य च तोकम्" इति।

एवं निरुक्तव्याकरणयोः सम्बन्धः निकट एव वर्तते। निरुक्तस्य अर्थपरिज्ञानं प्रयोजनम्। व्याकरणस्य स्वरसंस्कारविचारविवेचनं प्रयोजनम्। एतयोर्मध्ये अन्योन्याश्रयसम्बन्धः सम्भवति। अर्थात् निरुक्तस्य अध्ययनं विना व्याकरणशास्त्राभ्यासः अपूर्ण एव। अनैरुक्तः अर्थावधारणकरणे असमर्थः। एवमेव अर्थावधारणं विना स्वरसंस्कारज्ञानसाधनेऽपि असमर्थ एव।

एवमुक्ते निरुक्तोऽपि उणादिवत् किमर्थं न व्याकरस्याङ्गम् ? अस्य निरुक्तस्य किमर्थं विद्यास्थानत्वम् ? इति प्रश्नद्वयस्य निरुक्ते एव समाधानं वर्तते। निरुक्तं शास्त्रं तस्य स्वतन्त्रतया अनुषङ्गतं व्याकरणं पूरयति। अस्य तु शास्त्रस्य विद्यास्थानेषु अर्थनिर्वचनस्थानं लभते। व्याकरणं तु लक्षणप्रधानं शास्त्रम्। व्याकरणप्रकृतिप्रत्ययादिभिः प्रक्रियारूपेण शब्दोत्पत्तिवधानं दृश्यते। परन्त्वस्मिन् निरुक्ते शास्त्रे शब्दस्य अर्थनिर्वचनप्रक्रिया विशेषेण वर्णिता। तत्तु समाधानं निरुक्ते एवं द्रष्टुं शक्यते। यथा- "तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसधकञ्च" इति यास्कः अस्य निरुक्तस्य प्रयोजनमुक्त्वा अस्य शास्त्रस्य व्याकरणपृथक्त्ववैशिष्ट्यम् दर्शितवान्।

निरुक्तस्य विदाङ्गत्वं साधयित्वा स्थूलावलोकनमत्र कृत्वा तत्रत्यान् विज्ञानांशान् दार्शनिकांशान् व्याकरणांशान् च चर्चारूपेण निरूप्य अग्रगेऽध्याये निरुक्तोक्तस्य शब्दस्य चापीतरेषु शास्त्रेषु निरूपितस्य तस्य स्वरूपस्य तुलनं कृत्वा तस्य शब्दस्य स्वरूपो निर्णीयते।

## तृतीयोऽध्यायः

# शब्दचिन्तनम्

शब्दनिर्वचनप्रक्रियायां तु शब्दस्य स्वरूपनिर्णयविषयकचर्चा करणीयमेव। अत एवात्र अध्याये शब्दस्य स्वरूपमुद्दिश्य किञ्चित् विश्लेषणं क्रियते। शब्दज्ञानविषयमुद्दिश्य नानाविधाः वादाः नानाशास्त्रेषु उद्भूता इति सर्वत्र लोके प्रचलित एव विषयः। परन्तु अत्र एकः प्रश्न उद्भूयते यत्- निरुक्तसम्बद्धे विषये तु शब्दस्वरूपनिरूपणस्य को वा उपयोगः? इति। तथा हि उच्यते- किन्त्वत्र निरुक्तविषयके ग्रन्थे मुख्यरूपेण शब्दस्य निर्वचनविषयकचर्चा जायते। शब्दनिर्वचनदाने तु तत्र शब्दस्यैव प्रामुख्यं दृश्यत एव। यदि अत्र शब्दस्य प्रमुखत्वं नास्तीति वादं यो मण्डयति तर्हि तस्य वाक्येषु उन्मत्तप्रलापित्वं कल्पनीयमेव। अत्र तु शब्दस्वरूपविश्लेषणे एका विषयव्याप्तिः सञ्जग्राह। किन्तु अस्माकं भारतीयसाहित्ये शास्त्रेषु च प्रतिशास्त्रं शब्दमुद्दिश्य यत्र कुत्रापि यत्किञ्चिदपि च तस्य शब्दस्य शास्त्रेषु प्रामुख्यं वर्तत इति निरूपयन्त्येव। तेनात्र शब्दस्वरूपनिरूपणे विषयव्याप्तिः कल्पिता भवति। व्याप्तिस्तु इयं वर्तते- प्रकृते शब्दसम्बद्धविषयः व्याकरणन्यायशास्त्रयोः तस्य विस्ताररूपवादः दृश्यते। तदनुसृत्य यत्र कुत्रापि अन्यत्र लाघवेन शब्दस्य विषयः निरूप्यते चेत् तमपि विषयं स्वीकृत्य अत्र चर्चा क्रियते। प्रथमं तावत् न्यायव्याकरणशास्त्रयोः इतरेषु च

शास्त्रेषु शब्दस्य लक्षणं किम् ? एवं तल्लक्षणमनुसृत्य को वा तस्य शब्दस्य स्वरूपः? अर्थात् शब्दस्य नित्यत्वं वा अनित्यत्वं वा नित्यानित्यत्वं वा इति कुत्र कथं तस्य स्वरूपं अङ्गीकृतम् इति अत्र सलक्षणं प्रतिपादयितुं यतते।

## नैयायिकमते शब्दः

प्रथमं तावत् न्यायशास्त्रे शब्दमुद्दिश्य किञ्चोक्तं लक्षणमिति पश्यामः। न्यायशास्त्रे तु शब्दः गुणरूपेण प्रमाणरूपेण च स्वीकृतो दृश्यते। प्रथमं गुणरूपकं शब्दमत्र विश्लेषयामः। गुणरूपः शब्दः द्रव्येषु विभजितस्य आकाशस्य विशेषगुणः इति तत्र तस्य विशेषगुणकत्वस्य स्वरूपः द्रष्टुं लभते। तस्य तु आकाशस्य विशेषगुणविचारे तु अन्नम्भट्टस्य आकाशलक्षणमेवं दृश्यते। "शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यञ्च"[1] इति। अत्र तु शब्दस्य नित्यत्वविचारे यत्किमपि उक्तं दृश्यते तत्तु अत्रोक्तस्य नित्यशब्दस्य आकाशे समन्वयः जायते। अर्थात् आकाशं नित्यमिति तत्र लक्षणे उक्तमिति फलति। तत्रैव तर्कसङ्ग्रहे अग्रगेषु भागेषु गुणलक्षणप्रतिपादनसमये शब्दस्य लक्षणमेवं दृश्यते यत्- "श्रोत्रग्राह्यो गुणः शब्दः"[2] इति। तस्य वृत्तित्वं तु पूर्वोक्तवत् आकाशे एव वर्तते। तर्कसङ्ग्रहे- "आकाशमात्रवृत्तिः" इति वाक्येन आकाशद्रव्यस्य सामान्यविशेषोभयगुणः केवलः शब्द एवेति आचार्यः पाठयति। तत्र स एव अन्नम्भट्ट आचार्यः तस्य

---

[1] तर्कसङ्ग्रहे आकाशलक्षणम्

[2] तर्कसङ्ग्रहे शब्दलक्षणम्

तर्कसङ्ग्रहग्रन्थस्य व्याख्यायां दीपिकायां तु शब्दलक्षणव्याख्यानावसरे "श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं आकाशस्य लक्षणम्" इति व्याख्यातवान्। अत्र सामान्येषु नाम तर्कशास्त्राज्ञानिषु एकः प्रश्न उदेति। एवं- कथं वा शब्दः श्रोत्रेन्दियजन्यः? तत्तु शब्दः मुखतो वा वस्तुताडनतः उद्भवति। अत्र तु आचार्यः श्रोत्रेन्द्रियजन्य इति शब्दं लक्षयति। कथं वा तस्य सम्भवत्वम्? इति। कथमिति चेत्- अत्र श्रोत्रेन्द्रियजन्यो नाम श्रोत्रेन्द्रियप्रत्यक्ष इति स्वीकार्यम्। तदा तत्र लक्षणे न कोऽपि दोषः सिद्ध्यति। एवं तत्रैव तर्कसङ्ग्रहे शब्दः द्विधा विभक्तः- भेर्यात्मको वर्णात्मक इति। अर्थात् भेर्यात्मकः शब्दः कश्चन वस्तुसंयोगजः। भेरीनिनादादिकेन जायमानः शब्दः भेर्यात्मक इति अत्र प्रतिपादनमिष्टम्। एवमेव वर्णात्मकस्तु अस्माभिः उच्चार्यमाणैः वर्णादिभिः यः शब्दो जायते स एवेति अत्र लक्षणोद्देशः। एवं गुणरूपस्य शब्दस्य गुणलक्षणप्रतिपादनसमये न कुत्रापि तस्य नित्यानित्यत्वविषयः प्रस्तुतः। परन्तु अत्र एकः समन्वयः कर्तुं शक्यते। तत्तु- यदि शब्दगुणकस्य आकाशस्य नित्यत्वमुच्यते चेत् तदपि आकाशे शब्दस्य समवायसम्बन्धत्वाच्च शब्दस्य नित्यत्वं प्राप्यते। यदि शब्दस्य अनित्यत्वमुच्यते तर्हि आकाशलक्षणे एव दोषो जायते। किन्तु समवायसम्बन्धः केवलनित्यद्रव्यवृत्तिष्वेव वक्तुं शक्यते। अर्थात् आकाशे शब्दस्य संयोगसम्बन्धः उच्यते चेत् आकाशस्यापि विभुत्वनित्यत्वयोः दोषः कल्पनीयः। तेन आकाशे शब्दस्य समवायसम्बन्धत्वात् आकाशस्य शब्दस्य च नित्यत्वं स्पष्टम् ज्ञायते। तत्तु सर्वथा स्वीकार्यमेव।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

गुणरूपस्य शब्दस्य निरूपणानन्तरं तत्रैव तर्कसङ्ग्रहे अनुभवेषु भिद्यानाम् अन्यतमस्य यथार्थानुभवस्य चतुर्थभेदो हि शब्दप्रमाणम्। अत्र आचार्याः शब्दं प्रमाणरूपेण स्वीकृतवन्तः। तस्य तु शब्दस्य लक्षणमेवमाह "आप्तवाक्यं शब्दः"[3] इति। अर्थात् आप्तोच्चरितवाक्यस्य तार्किकाः अत्रान्तरे शब्दत्वं दीयन्ते। आप्त इत्यस्य शब्दस्यापि अत्रैव लक्षणं दृश्यते यत्- "आप्तस्तु यथार्थवक्ता" इति। यश्च यं विषयं यथार्थरूपेण बोधयति स एव आप्तः तद्विषयस्तु शब्दप्रमाणमिति आचार्यैः प्रतिपादितम्। तमेव शब्दम् अग्रे इतरे नैयायिका आचार्यास्तु शाब्दबोध इति च प्रतिपादयन्ति। अस्तु, इतः पर्यन्तम् आप्तशब्दयोः पदयोः स्वरूपो दर्शितः। परन्तु तत्र आप्तवाक्यम् इत्यत्र वाक्यपदस्य किं वा लक्षणम्? इति प्रश्नः सर्वथापि सञ्जायत एव। तस्य तु वाक्यशब्दस्य अस्मिन्नेव तर्कसङ्ग्रहे "वाक्यं पदसमूहः" इति लक्षणं लक्षितम्। अशक्तानां पदानां समूहात् वाक्यो न भवितुमर्हति। किन्तु तत्रैव अन्नम्भट्टः "गामानय" इत्युदाहरणं दत्त्वा "शक्तं पदम्" इति पदस्य प्रयोगं विधीयते। किं तत्र शक्तं पदम्? इति चेत्- सा तु शक्तिः "अस्मात् पदात् अयमर्थो बोद्धव्य" इति "इदं पदं इममर्थं बोधयतु" इति वा ईश्वरसङ्केतः शक्तिः। ईश्वरसङ्केतो नाम ईश्वरेच्छा। शक्तमित्यस्य निरूपकतासम्बन्धेन शक्तिविशिष्टमिति तदर्थः फलति। उपर्युतयोः ईश्वरसङ्केतवाक्ययोस्तु उदाहरणाय घटपदात् घटरूपोऽर्थ एव बोद्धव्य इति

---

[3] तर्कसङ्ग्रहे शब्दप्रमाणलक्षणम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

विधिः कृता। किमर्थमत्र तद्वदिति प्रश्ने तु अस्य कारणं तर्कसङ्ग्रहग्रन्थस्य पदकृत्यमित्यस्मिन् व्याख्याने लभते यत्- "अर्थस्मृत्यनुकूलपदार्थसम्बन्धत्वं शक्तेर्लक्षणम्"[4] इति। सरलतया ज्ञातुमेवं विचारणीयम्- यदि घटमिति वस्तुं स्मृत्वा तद्रूपदर्शनेन तत्स्वरूपबोधकः पत्पदार्थस्मारको यः शब्दपद्धतेः बाधः मनसि बुद्धौ च जायते सैव शक्तिः इति। तस्याः शक्त्याः 'अयं घटः' इति शाब्दबोधः जायते। तदेव शब्दज्ञानं शाब्दबोधः पूर्वोक्तं शब्दप्रमाणञ्च। यथा शब्दप्रमाणे शक्तिः सहायकः तथैव लक्षणापि शब्दज्ञाने सहकारिणी भवति। सातु लक्षणा द्विधा विभक्ता। ते च- गौणी शुद्धा इति। तत्र शुद्धा लक्षणा पुनस्त्रिधा विभक्ता दृश्यते। यथा- जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा इति। यथा शक्तिरित्यस्य लक्षणं तर्कसङ्ग्रहे दृश्यते तथैव लक्षणेत्यस्यापि लक्षणं तत्रैव दर्शितम्। "शक्यसम्बन्धो लक्षणा"[5] इति तस्याः लक्षणम्। अर्थात् पदपदार्थसम्बन्धबोधरूपेण शाब्दबोधे सहकारिण्यां शक्तौ सहकारिणी लक्षणा इति मन्तव्यम्। यथा- रामो गच्छतीत्यत्र रामस्य गमनरूपक्रियायां शक्तिरुत्पद्यते। अत्र शक्तिः सहकरोत्येव परन्तु गङ्गायां घोषः इत्यत्र शक्तिज्ञानमनुसृत्य स्वीकारे गङ्गानदीप्रवाहमध्ये कथं वा घोषो भवितुमर्हति? अत एव गङ्गायाः तीरे घोषः इति समन्वितुं लक्षणायाः सहकारित्वम् अवश्यं दृश्यते इति नवीनानां

---

[4] तर्कसङ्ग्रहे शक्तिलक्षणम्

[5] तर्कसङ्ग्रहे लक्षणालक्षणम्

तार्किकाणां मतम्। इतः पर्यन्तं तु वाक्यार्थज्ञानमुद्दिश्य विषयः प्रस्तुतः। परं कथं शाब्दबोधः जायते? किं वा तज्ज्ञानजनने कारणमित्यधिकृत्य प्रस्तूमः। तर्काचार्यस्य अन्नम्भट्टस्य नये तु आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतव इति दृश्यते। किं तत्र आकाङ्क्षा वा योग्यता वा सन्निधिश्चेति प्रश्ने- एके वाक्ये पदस्य पदस्य व्यतिरेकसम्बन्धराहित्यम् आकाङ्क्षा इति तत्र आचार्यैः लक्षणवाक्यमुच्यते। तथा हि- "पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभाव-व्यतिरेकत्वम् आकाङ्क्षा" इति। तत्रैव आचार्यः आकाङ्क्षाम् उदाह्रियते- "गौरश्वः पुरुषो हस्तीति" इति। अत्र वाक्ये द्वयोः पदयोः मध्ये न कोऽपि प्रायोगिकसमन्वयः दृश्यत एव। किं वक्तुमिच्छतीति आकाङ्क्षा एव न दृश्यते। एतत्प्रकारकानुभवराहित्यमेव आकाङ्क्षा इति आचार्याणां सुमतम्। योग्यता नाम "अर्थाबाधः" इति पुनराचार्यः बोधयति। तत्रैव- "अग्निना सिञ्चति" इत्यनेन वाक्येन उदाह्रियते यत्- सेककरत्वस्य जलादिधर्मस्य वह्नौ उक्तत्वात् तत्र अर्थस्य बाधः जायत एव। वह्नौ तु ज्वलनत्वधर्मस्य वृत्तिः सर्वथा सर्वत्रापि रूढौ ज्ञात एव विषयः। तस्मात् अर्थबाधात् न शाब्दबोधो जायत इति अत्र आचार्यस्योद्देशः। तदनन्तरं तु सन्निधिरित्यस्य हेतोः लक्षणनिरूपणावसरे तु उच्चारितानां पदानां सान्निध्यं शाब्दबोधे कारणमिति आचार्यमतम्। व्याकरणशास्त्रे अस्याः सन्निधेः "परः सन्निकर्षः संहिता"[6] इत्यनेन सूत्रेण संज्ञा दीयते। अस्यास्तु लक्षणं तर्कसङ्ग्रहे "पदानाम्

---

[6] आष्टाध्यायी १।४।१०९

अविलम्बेनोच्चारणं सन्निधिः" इति लक्षितम्। रामः इत्युक्त्वा कालान्तरे गच्छतीत्युच्चारणं रामस्य गमनक्रियां न बोधितुं शक्यते। किन्तु तत्र पदानां सन्निधिर्वा सन्निकर्षः नास्त्येव। तेन सान्निध्यरहितानां पदानां समूहः वाक्यरूपेण नाङ्गीकर्तुं शक्यते। तत्रैव वाक्यमपि द्विधा विभक्तम्- वैदिकं लौकिकञ्चेति। वैदिकं तु वाक्यं सर्वत्रापि रूढौ वर्तत एव। तत्तु ईश्वरोक्तं वाक्यम्। तत्तु वेदादिः। ईश्वरोक्तानां वाक्यानां सर्वथापि प्रमाणमिति स्वीकर्तव्यमेव। वेदानां तु अप्रामाण्यं न कर्तव्यमिति विधिः लोकसिद्धः। तथा च लौकिकं नाम अस्माभिः सम्भाषणीया संस्कृतभाषा सा च न्यायादिशास्त्राणीति मन्त्रेतराणीति च लौकिकस्य वाक्यस्य अर्थः।

एवं प्रकारेण अन्नम्भट्टाचार्यः तस्य तर्कसङ्ग्रहे गुणरूपेण प्रमाणरूपेण च शब्दस्य स्वरूपं प्रतिपादितवान्। एवं तस्य स्वरूपनिश्चयावसरे शब्दस्य नित्यत्वमेव सिद्ध्यतीत्यपि अप्रतिपादयत्। आचार्येण तत्र ग्रन्थे रूपादिचतुष्टयमिव नित्यगतं नित्यम्, अनित्यगतमनित्यमिति न कुत्रापि गुणरूपशब्दस्य लक्षणप्रतिपादनसमये तथा नित्यानित्यत्वयोः विचारः दर्शितवान्। नित्यरूपस्य आकाशस्य गुणकत्वम् अस्य शब्दस्य सिद्ध्यति। तेनैव नित्यत्वस्य गुणकत्वात् अस्यापि शब्दस्य नित्यत्वमेव सिद्ध्यति। तार्किकाणामपि नवीनानां नैयायिकानां मते तु शब्दः नित्य एवेति सर्वथा सिद्धः।

नैयायिकानां प्राचीना अपि शब्दं प्रमाणमिति तेषां मते अङ्गीकुर्वन्ति। अत्र तु शब्दविचारे नवीनाः प्राचीनानां मतमेव अनुसरन्ति।

द्वयोरपि नैयायिकानां तु मते मङ्गलव्याप्त्यादिषु केषुचन विषयेष्वेव वैमतिर्वर्तते। अन्यथा द्वावपि एकमातृजन्यत्वे सति पुत्रद्वित्वं प्रदर्शयन्ति। परन्तु तत्र व्याप्तौ भूतधूमत्वकल्पनेन तमपि व्याप्तिविषयकं वैमतं परहरन्ति। एवमेव मङ्गलाचरणविचारेऽपि तद्वैमतमध्ये जन्मान्तरीयं मङ्गलं कल्पयित्वा तेषां समस्यां परिहरन्ति।

तथा च कारिकावल्यां शाब्दबोधविषये एका कारिका दृश्यते-

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।**

**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥**[7] इति।

अत्र साध्ये शाब्दबोधे पदज्ञानं शब्दज्ञानं वा करणम्। करणं नाम असाधारणकारणम् इति तस्य लक्षणम्। असाधारणकारणं नाम साध्ये मूलकारणमिति भावः। तत्पदज्ञानानन्तरं तत्पदार्थज्ञानं शाब्दबोधे व्यापारः। पर्वतो वह्निमान् धूमात् यथा महानसः इत्यादि अनुमानप्रमाणवाक्ये करणव्यापारयोरनन्तरं साध्यः सिद्ध्यत्येव। परन्तु अत्र शाब्दबोधे करणव्यापारयोरनन्तरं साध्यशाब्दबोधो न सिद्ध्यति। तत्सिद्ध्यर्थं व्यापारानन्तरं ईश्वरसङ्केतः तत्र साध्ये सहकरणीयम्। तेनैव कारणेन कारिकायां "शक्तिधीः सहकारिणी" इति उक्तवन्तः। शाब्दबोधे शक्तिज्ञानं सहकरोतीति अस्यार्थः फलति। "अस्मात् पदात् अयमर्थो बोद्धव्य" इति ईश्वरसङ्केतं विना न क्वापि शाब्दबोधो जायते। किन्तु शक्तिः पदपदार्थयोः

---

[7] कारिकावली

सम्बन्धं बोधयति। तत्सम्बन्ध एव साध्ये शाब्दबोधे सहकारिज्ञानमिति मुक्तावलिकारः मन्यते। अर्थात् शक्तिज्ञानं विना शाब्दबोधो न जायते। तत्र ईश्वरसङ्केतत्वमेव तज्ज्ञाने विधिः। एवमत्र नैयायिके तु मते शब्दस्य नित्यत्वं प्रतिपादितम्। तदनन्तरमग्रे व्याकरणशास्त्रे शब्दस्य किं वा स्वरूपमिति परीक्ष्यामः।

## व्याकरणमते शब्दः

वैयाकरणास्तु शब्दस्य नित्यत्वमेव कल्पयन्ति। परमलघुमञ्जूषाकारस्तु नागेशभट्टः शब्दस्य नित्यत्वं प्रतिपादयति। अस्मिन् व्याकरणे शास्त्रे शब्दस्य नित्यत्वमुद्दिश्य कृतो वादः स्फोटवादः इत्यनेन नाम्ना कथयन्ति।

**स्फोटः :-**

कोऽयं स्फोटः? इति प्रश्नः उद्भूयत एव। लोके तु स्फोटो नाम अग्निस्पर्शनेन जायमानः महान् शब्दः इति प्रसिद्धः। परन्तु न तद्रूपजः अत्रोक्तः स्फोटः। वैयाकरणेषु स्फोटो नाम मूलरूपा वाक् इति परमलघुमञ्जूषया ज्ञायते। तत्रैव तां वाचं चतुर्धा विभजन्ति। ताश्च- परा पश्यन्ती मध्यमा वैखरी इति।

नागेशभट्टस्य परमलघुमञ्जूषायां स्फोटनिरूपणावसरे सन्दर्भवशात् शक्तिरपि निरूपिता। ततः पूर्वं शक्त्याश्रयस्य शब्दस्य किं स्वरूपमिति विचारणीये समये केवलवर्णानां शक्त्याश्रयत्वं व्यर्थमिति बोधितवन्तः।

किन्तु केवलवर्णस्य शक्त्याश्रयत्वे द्वितीयादिवर्णानां उच्चारणस्य वैयर्थत्वं सम्भवति। अतः केवलवर्णानां शक्त्याश्रयत्वम् असम्भवमिति दिक्। वर्णसमुदायस्यापि शक्त्याश्रयत्वस्य असिद्धिः दृश्यते। किन्तु उच्चरितपरक्षणप्रध्वंसत्वं अस्मिन् सिद्ध्यति। ततः वर्णसमुदायस्य युगपत्सम्भवत्वं न सिद्ध्यति। तेन अत्र वर्णसमुदायस्यापि शक्त्याश्रयत्वं न सिद्ध्यत्येव। एवं द्विक्षणावस्थानां शब्दबुद्धिकर्मणाम् "इदं पूर्वव्यवहृतम्" "इदं परजम्" इति व्यवहारस्य असम्भवत्वं दृश्यते। तथा हि नष्टविद्यमानानां वर्णानामपि अस्मादेव कारणात् उच्चरितस्य वर्णस्य वा वर्णसमुदायस्य नैव शक्त्याश्रयत्वकल्पनम् असमञ्जसम्। परं कुत्र वा शक्त्याश्रयत्वं कल्पनीयमिति चेत्- श्रूयमाणानां वर्णानां वा वर्णसमुदायस्य शक्त्याश्रयत्वं समञ्जसमिति नागेशभट्टः तस्य परमलघुमञ्जूषायां ग्रन्थे तस्य मतं सिद्धान्तितवान्।

पूर्वोक्तवाक्यानाम् अध्ययनेन ज्ञायते यत्- वैयाकरणानां मते स्फोटात्मकस्य शब्दस्य शक्त्याश्रयत्वमिति। तेषामेव मते सा च स्फोटात्मिका वाक् चतुर्धा विभक्ता। सा च- परा पश्यन्ती मध्यमा वैखरीति वाक् चतुर्विधा। परा तु वाक् पश्यन्ती मध्यमा वैखरी इति त्रिधा अभिव्यञ्जयति। मध्यमा तु वाक् चेतनात्मिका इत्युच्यते। तस्याः चेतनात्मिकायाः वाचः नादांशात् नित्यस्वरूपः स्फोटात्मकश्च शब्दः सञ्जायते। अस्मादेव नादांशस्वरूपकात् शब्दात् महद्वाक्यस्य अर्थबोधो जायते। महद्वाक्यस्य वा अपौरुषेयस्य वेदस्य अस्मात् शब्दात् अर्थबोधो

जायत इति फलत्येव। अत एव इयं वाक् नित्या इति वैयाकर्णानां सुमतम्। अपरा वैखरीति वाक् तत्र दृश्यते। सा च प्राकृतवैकृतभेदया द्विधा वर्तते। अत्र तु प्राकृतध्वनिः परश्रोत्रग्राह्य इति एतेषामभिमतम्। परश्रोत्रग्राह्यायाः प्राकृतध्वनेः नित्यरूपको स्फोटशब्दः सञ्जायत इति भर्तृहरिः तस्य वाक्यपदीये सिद्धान्तितवान्। वैयाकरणे तु मते नित्यरूपस्य वैखर्यात्मकस्य स्फोटस्य वर्ण-पद-वाक्यभेदेन त्रैविध्यमुच्यते। तत्रापि वर्णपदवाक्यानि त्रीणि पुनः जातिव्यक्तिभेदेन षोढा निरूपितानि। तत्रान्तरे च पदवाक्ययोः अखण्डस्फोटत्वमुक्त्वा तत्र स्फोटः अष्टधा इति विभजितवन्तः। अत्र पूर्वोक्ते वर्णपदे व्याकरणशास्त्रे प्रकृतिप्रत्ययगा इति  ग्राह्याः। ते च अष्टौ एवं वर्तन्ते-

१. वर्णस्फोटः
२. पदस्फोटः
३. वाक्यस्फोटः
४. वर्णजातिस्फोटः
५. पदजातिस्फोटः
६. वाक्यजातिस्फोटः
७. अखण्डपदस्फोटः
८. अखण्डवाक्यस्फोटः

इति। लोके एकस्याः व्यक्तेः यत्र कुत्रापि कार्यप्रवृत्तये वाक्यस्य आवश्यकता तु वर्तत एव। किमिदं वाक्यमिति चेत्- "पदसमूहो वाक्यमर्थसमाप्तौ"[8] इति वात्स्यायनः तस्य न्यायभाष्ये वाक्यस्य लक्षणमुक्तवान्। केवलपदार्थज्ञानेन व्यक्तेः लोके सर्वत्र प्रवर्तकत्वं न सिध्यति। तदर्थमेव तत्र

---

[8] वात्स्यायनन्यायभाष्यम् २।१।२५

निराकाङ्क्षवाक्यार्थमपेक्षितम्। तद्रूपवाक्यार्थबोधे कारणीभूतस्य वाक्यस्फोटस्य स्फोटभेदेषु मुख्यत्वं वैयाकरणेषु सिद्ध्यति। यथा- "तत्र वाक्यस्फोटो मुख्यः"[9] इति। सुबन्ततिङन्तपदसमूह एव वाक्यमिति "पदसमूहो वाक्यमर्थसमाप्तौ"[10] इत्यनेन सूत्रेण वात्स्यायनः तस्य उपस्कारन्यायभाष्ये अभिमण्डितवान्। तथैव किं वा अत्र पदम्? इत्यस्यापि प्रश्नस्य अक्षपादो गौतमः तस्य न्यायसूत्रेषु "ते विभक्त्यन्ताः पदम्"[11] इत्यनेन सूत्रेण पदस्य स्वरूपमुक्तवान्। अत्र पदशब्देन सुबन्ततिङन्तात्मको वर्णसमूहः इति ज्ञेयः इत्यर्थः फलति।

अथेदं विचारयामः। पूर्वोक्तविधया अखण्डवाक्यस्फोटस्य मुख्यत्वम-ङ्गीकृत्य तस्य वाच्यवाचकत्वमिति स्वीकारे प्रकृतिप्रत्ययविभागात् पदव्युत्पादकस्य व्याकरणशास्त्रस्य वाक्यप्रसक्तिरेव नास्तीति कारणेन तत्र मूलस्य वैयर्थ्यं सिद्ध्यति। तन्निरासार्थं तत्रैवोच्यते- "इदं पदमिममर्थं बोधयतु" इति शक्तिज्ञानेनेश्वरेच्छया विना अर्थबोधो न जायत एव। यथा तत्र शक्तिग्रहः पदस्य जायते तथैव वाक्येषु न जायत इति लोकप्रसिद्ध एव। अर्थात् शक्तिग्रहसकरणेन पदार्थज्ञानात् पदार्थबोधो जायते। तेषां पदार्थानां परस्परसंसर्ग एव वाक्यं तदर्थबोधश्च वाक्यार्थबोधो इति तदर्थम्। अत्रायं विषयः स्पष्टं ज्ञायते यत्- पदार्थबोधाभावे

---

[9] परमलघुमञ्जूषायां स्फोटनिरूपणम्

[10] वात्स्यायनन्यायभाष्यम् २।१।२५

[11] गौतमन्यायसूत्राणि २।२।६०

वाक्यार्थबोधो न जायत इति। वाक्यानि पदवत् नैकरूपगाः। अतः वाक्यार्थबोधे वाक्यस्य शक्तिग्रहो न सम्भवतीति च स्पष्टम्। तत्रापि व्याकरणातिरिक्तेन लघूपायेन समस्तं वाक्यजालं निरूपयितुं न शक्यते। अत एव तदर्थबोधाय वाक्ये सुबन्ततिङन्त इत्यसत्पदविभागमुक्त्वा पदे प्रकृतिप्रत्ययविभागरूपं वर्णं च तत्र कल्पितम्। अस्मादेव प्रयोगात् वैयाकरणेषु "एकमात्रालाघवेन पुत्रोत्साहं मन्यन्ते वैयाकरणाः" इति उक्तन्यायः पूर्वस्मिन्नेव अन्वित इति ज्ञायते। व्याकरणशास्त्रे तेषां प्रकृतिभ्यो वा प्रत्ययेभ्यः तेषामर्थः प्रतीयते इति नियमः सर्वसिद्धः। तेषाञ्चाभावे तत्तदर्थाः अप्रतीता इति अन्वयव्यतिरेकाभ्यां [तत्सत्त्वे तत्सत्त्वमित्यन्वयः। तदभावे तदभाव इति व्यतिरेकः] प्रकृतिप्रत्यययोः अर्थः कल्पितः। अत्रोक्तोऽयं आर्षविभागः व्याकरणशास्त्रप्रक्रियानिर्वाहायेति कल्पनीयम्। अत्रान्तरे-

**उपायाः शिक्षमाणानां बालानामुपलालनाः।**
**असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहते॥** इति।

अनया कारिकया ज्ञायते यत् अस्माकमपि बुद्धौ शब्दस्य विषयाध्ययनेन तदनित्यमिति बोधो जायते। परन्तु अर्थान्तर्गमनेनैव वस्तुतः अखण्डवाक्यस्फोटः नित्य इति स्पष्टबोधो जायते इति।

**मुख्यतात्पर्यविचारः :-**

नागेशभट्टस्य परमलघुमञ्जूषायां स्फोटनिरूपणावसरे- "तत्र वाक्यस्फोटो मुख्यः" इति वाक्यं प्रयुक्तं दृश्यते। तस्मिन् वाक्ये प्रयुक्तानां

दलानां सार्थक्यं ब्रूमः। वाक्ये प्रयुक्तस्य 'तत्र' इत्यस्य वैयाकरणसिद्धान्तसमुदायावयवभूते वाक्यस्फोटे इत्यर्थः फलति। वाक्यञ्चासौ स्फोटश्च वाक्यस्फोटः इति विग्रहः। अर्थात् वाक्यरूपः स्फोटः इति कर्मधारयसमासेऽयं प्रयुक्तः। "वचोऽशब्दसंज्ञायाम्"[12] इत्यनेन सूत्रेण विकल्पे शब्दसंज्ञाभावे कुत्वनिषेधात् 'वाच्यम्' इति जायते। यतो हि शब्दसंज्ञायां 'वाक्यम्' इति जायते। अत एव मुख्ये शब्दसंज्ञाव्यवहृते वाक्ये एव स्फोटस्य अन्वयः इति स्पष्टम् ज्ञायते। यस्तु स्फोटः वाक्यं विना पदादीनां अन्वेति तत्तु आरोप एवेति नागेशस्य मतम्। परन्तु स्फोटशब्दः कथं वा निरुच्यते? इति प्रश्नः उद्भूयत एव। तत्र स्फोटो नाम "स्फुटति अर्थः येन सः स्फोटः" इति। अर्थविषयकबोधजनकः स्फोट इति तस्यार्थः फलति। परन्तु अत्र चक्षुरादीन्द्रियैरपि घटादिविषयकार्थबोधे जाते चक्ष्वादौ स्फोटलक्षणस्य अतिव्याप्तिः सम्भवतीति केचन तेषां मतमुच्यन्ते। स्फुटति इति व्युत्पत्तौ अतिव्याप्तिश्चेत् "स्फुट्यते" इति कथनेन "ध्वनिना अभिव्यज्यत इति स्फोटः" इति अर्थे कृते ध्वनिना व्यञ्जनीभूत्वा सति अर्थविषयक-बोधजनकः स्फोटः इत्यनेन अर्थेन स्फोटस्य अदोषसिद्धिः।

अथ "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति सः शब्दः" इत्यनेन महाभाष्यवचनेन व्युत्पत्तिद्वयं सिद्ध्यति। येनोच्चारितेन = येनोच्चारितप्रकाशितेन इत्यनेन व्याख्यानेन ध्वनिव्यङ्ग्यत्वं

---

[12] अष्टाध्यायी ७।३।६७

सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति इत्यनेन वाक्येन अर्थविषयकबोधजनकत्वं सिद्धम्।

तत्र मूले प्रकृतवाक्ये वाक्यस्फोटः पक्षः, मुख्यत्वम् साध्यः, लोकस्यैव अर्थबोधकत्वादिति हेतुः इति सिध्यति। अत्र तु पक्षे मुख्यत्वरूपसाध्यरहिते पदस्फोटे अर्थबोधजनकत्वरूपहेतोः सत्त्वे साध्याभाववद्वृत्तिः हेतुः इति व्यभिचारदोषशङ्कायां "तेनैवार्थसमाप्तेश्च" इति हेतुवाक्यं कृत्वा मूलकृत् तं व्यभिचारं परिहृत्य प्रकृतवाक्यं पूरितवान्। अर्थात् "लोके तस्यैवार्थविषयकनिराकाङ्क्षबोधजनकत्वात्" इति दत्तस्य हेतोः स्वरूपमिति सिध्यति।

अर्थबोधसमाप्तौ समर्थं पदसमूहात्मकं वाक्यमिति न्यायभाष्यकारो वात्स्यायनः बोधितवान्। पदसमुदायात्मकं वाक्यमित्युक्ते अनर्थपदसमुदाये वाक्यलक्षणस्य अतिव्याप्तिः सम्भवति। क्रियाकारकयोः परस्परं नियताकाङ्क्षा दृश्यते। तद्रूपकाङ्क्षोपसंहारकः पदसमूहः वाक्यमिति मूलकृत् अतिव्याप्तिं परिहरति।

वाक्यस्फोट एव मुख्य इति चेत्- वाक्यावयवीभूतानि पदानि पदावयवीभूता प्रकृतिप्रत्ययाः सर्वे असद्रूपा इति कृत्वा पाणिन्यादिभिः तद्वर्णने तेषां वर्णनम् अप्रामाण्यमिति सन्देहो जायत एव। तदुच्यते यथा- रेखागवयन्यायमनुसृत्य वाक्यं तदर्थं च बोधयितुं उपायवत् तदवयवानां निरूपणेन तत्र अप्रामाण्यदोषः परिहृतः। अर्थवत्सूत्रभाष्ये तत्कृत् विशेष्यविशेषणभावरूपे संसर्गे वाक्यस्य शक्तिमङ्गीकृत्य समासग्रहणे

नियमार्थत्वमुक्तवान्। तदवसरे प्रदीपव्याख्याकारः कैयटः वाक्यस्य ध्वनिव्यङ्ग्यत्वं नित्यत्वञ्च उक्त्वा पदार्थसंसर्गरूपविशिष्टार्थवाचकत्वं प्रतिपादितवान्। एताभ्यां ग्रन्थाभ्यां पदसमूहात्मकस्य वाक्यस्य पदार्थसंसर्गरूपस्य वाक्यार्थस्य च निरूपणं तेषां नित्यत्वप्रतिपादनमेव ऋषितात्पर्यमिति ज्ञायते।

वैयाकरणानां मते तु वाक्यस्फोटे एव मुख्यतात्पर्यः सिद्ध्यति। प्रकृतिप्रत्ययाद्यवयवैरेव वाक्यस्वरूपज्ञानसिद्धौ असतामेव अवयवानां (प्रकृतिप्रत्ययादीनां) कल्पनेन वाक्यार्थज्ञाने किमर्थं वा तत्र वाक्यस्फोटस्य कल्पनम् इति चेत् उच्यते नागेशः तस्य लघुमञ्जूषायाम्- "श्रुतिवाक्यादीनां बलाबलविचारकल्पनार्थं च तत्कल्पनेति बोध्यम्" इति। "तत्कल्पनेति अवयवतदर्थकल्पनेत्यर्थः। इदं चावयवकल्पनातो न सिद्ध्यतीति भावः" इति तद्वाक्यव्याख्यानावसरे कलाटीकायां तत्कृता बोधितम्। जैमिनिसूत्रेष्वपि "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां परस्परं समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति दृश्यते। तस्यार्थः एवं फलति यत्- श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यासु उक्तप्रमाणेषु द्वयोः एकत्र प्राप्तौ पूर्वस्मादपि परस्य दौर्बल्यविचारे प्रकृत्याद्यर्थविचारोऽपि अपेक्षित एवेति।

नागेशः स्फोटभेदे वर्णस्फोटस्य निरूपणावसरे तत्र वर्णशब्देन पदावयवभूताः प्रकृतिप्रत्ययाः ग्राह्याः इति विधीयते। ते एव तत्तदर्थवाचकाः। अत एव वर्णस्फोटशब्दस्य पदावयवीभूताः प्रकृतिप्रत्यया एव तत्तदर्थवाचका इति पूर्वोक्तवाक्यस्यार्थः फलति। अयं तु स्फोटः

व्याकरणशास्त्रप्रक्रियानिर्वाहक एवेति अस्याध्ययनात् भासते। अर्थात् पदव्युत्पादकाय प्रक्रियानिर्वहणार्थं व्याकरणशास्त्रसूत्रप्रवृत्तये वर्णस्फोटः उपकारकः इति। तत्र शास्त्रे स्फोटनिरूपणावसरे प्रकृतिप्रत्ययादिविभाग इव उपसर्गनिपातधात्वा-दिविभागोऽपि शास्त्रप्रक्रियानिर्वहणाय काल्पनिक एव। यथा पूर्वोक्ताः काल्पनिकाः तथैव लकारादिस्थानिनः तिबाद्यादेशा अपि कल्पिता एव। तेषु स्थानिनां अर्थकल्पने "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यादयः रीतयः ऋषिभिः बोधिताः। स्थान्यर्थबोधे आदेशा एव समर्था इति कारणेन द्वयोरपि कल्पितवाचकत्वसिद्धौ स्थान्यादेशयोः कस्य वा वाचकत्वमिति विचारः निष्फल एव। लोके पदस्य वाक्यस्य श्रवणेन अर्थबोधो जायते सति मुख्यवाचकत्वं तु प्रकृतिप्रत्ययसमूहकल्पितस्य पदस्य वा वाक्यस्य सिद्ध्यतीति अङ्गीकरणीयम्। अपेयप्रतिपत्त्यर्थास्तु ज्ञापनीयानामर्थानां ज्ञानाय (साधनीयमर्थं साधयितुं) उपायाः = साधनानि ; अनन्ताः (उपायाः अनन्ताः) इति न्यायेन देशभेदेन स्थानिनो भिन्ना इति मत्वा गौरवलाघवचर्चायाः तत्र अवकाश एव निर्गतः। अयं तु काल्पनिकविभागः नित्यस्य स्फोटस्य व्युत्पादनायैवेति परमलघुमञ्जूषायाः कलाटीकाकारः तस्य टीकायां बोधितवान्।

**पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता।**

**उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः॥** इति।

इयं कारिका कौण्डभट्टस्य वैयाकरणभूषणसारे दृश्यते। भट्टोजिदीक्षितकृतस्य वैयाकरणमतोन्मज्जनमिति कारिकाग्रन्थस्य

व्याख्यानमेव कौण्डस्य भूषणसारः। पूर्वोक्तकारिकायां उक्तपञ्चकोशसम्बद्धः विषयः तैत्तिरीयोपनिषदि भृगुवल्ल्यां वर्तते। तत्र वरुणपुत्रः भृगुः तस्य पितरं प्रति ब्रह्मपदार्थमुद्दिश्य प्रश्ने कृते वरुणः अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमया इति कोशपञ्चकं बोधयित्वा अवास्तवेभ्यः पूर्वपूर्वकोशेभ्यः आनन्दमय एव नित्यपदार्थः सति शेषाः पञ्चमकोशज्ञाने हेतव इति मत्वा तेषामङ्गीकारे नैरर्थ्यं वरुणेन परिहृतम्। एवमेवात्रापि नित्यपदार्थस्य स्फोटस्य ज्ञानसाधने प्रकृतिप्रत्ययादयः सहकारिण इति अङ्गीकृत्य तेषां नैरर्थ्यदोषः कौण्डेन तस्य वैयाकरणभूषणसारे परिहृतः।

एवं प्रकारेण नैयायिकानां वैयाकरणानां मते स्वरूपभेदेन शब्दस्य केवलनित्यत्वं प्रतिपादितम्। वेदान्तिनोऽपि उच्चारिते शब्दे नित्यत्वं न प्रतिपादयन्ति। अपौरुषेयं वेदं तत्र वर्णोत्पत्तौ हेतुरित्युक्त्वा वेदस्य अपौरुषेयत्वं प्रतिपाद्य तदवसरे वेदस्य वर्णरूपत्वात् वर्णस्य नित्यत्वं प्रतिपादयन्ति। एवमेव निरुक्ते शब्दस्य स्वरूपः यास्केन केन रूपेण अङ्गीकृत इति अग्रे विचारयामः।

## निरुक्ते शब्दः

इतः पर्यन्तं व्याकरणन्यायशास्त्रयोः शब्दनित्यत्वविचारमुद्दिश्य किञ्चित् निरूपितम्। शब्दः व्याकरणे च न्याये नित्यरूप एव। परन्तु नित्यस्य शब्दस्य तत्र तत्र स्वरूपभेदो भवत्येव। नैयायिकाः आकाशगुणरूपेण प्रमाणत्वेन आप्तवाक्यमिति च शब्दं निरूप्य तस्य

शब्दस्य नित्यत्वमुक्तवन्तः। तथैव व्याकरणशास्त्रे शब्दं स्फोटरूपेण स्वीकृत्य स शब्दः नित्यरूप इति निरूपितवन्तः। स्फोटात्मकं शब्दं विभज्य तत्रापि वर्णस्फोटः प्रधानः किन्तु पदवाक्यस्फोटौ वर्णस्फोटं विना न जायेते इत्युक्त्वा स्फोटात्मकः शब्दः सर्वथा नित्य इति निरूपितवन्तः। यथा नैयायिकाः वैयाकरणाश्च शब्दं निरूपितवन्तः तथैव यास्कोऽपि स्वरूपभेदेन तमेव शब्दं नित्य इत्यङ्गीकृतवान्। एवमेव यास्को यथा शब्दमङ्गीक्रियते तस्मिन्नेव स्वरूपे स्वरूपाभेदेन सर्ववेदभाष्यकारः सायणोऽपि शब्दस्य नित्यत्वं प्रकटितवान्। अत्र यास्कमतनिरूपणेन सायणमतमपि ज्ञायते इति अस्मदुद्देशः। परन्तु सायणः तत्रैव ऋग्भाष्यभूमिकायां वैयाकरणस्वरूपं स्फोटात्मकं शब्दमपि नित्य एवेति अभिधीयते। तत्र भूमिकायां वेदमन्त्रार्थ-समर्थनविचारे सायणः व्याकरणशास्त्रानुसरं स्फोटात्मकशब्दनित्यत्वं कथयति। तथैव ब्राह्मणानां निरूपणसमये शब्दनित्यत्वविचारे निरुक्तमेवानुसरति। तत्रापि सायणमते सर्वथा शब्दस्य इन्द्रियत्वानित्यत्वे निरस्ते। शब्दस्य सर्वव्याप्तिमत्वात् नित्यत्वं प्रतिपादितम्।

अथ यास्कमते शब्दनित्यत्वप्रतिपादनसमये प्रथमं तावत् औदुम्बरायणस्य मतं निरूपयति। औदुम्बरायणस्तु उदुम्बरस्य गोत्रापत्यमौदुम्बरिः। "अत इञ्"[13] इत्यनेन सूत्रेण अपत्ये गोत्ररूपे इञ् आदिवृद्धिश्च। औदुम्बरेरनन्तरापत्यमुदुम्बरस्य युवापत्यमौदुम्बरायणः इति

---

[13] अष्टाध्यायी ४।१।९५

"यञिञोश्च"[14] इति सूत्रेण यूनि युवापत्ये फक् आगमे औदुम्बरायणः इति सिद्ध्यति। अर्थात् उदुम्बरगोत्रे जातस्य औदुम्बरेरपत्यार्थे उदुम्बरस्य युवापत्यार्थे च औदुम्बरायणः सद्ध्यति इति दुर्गाचार्यः निरूपितवान्। स एव आचार्य इति यास्कः अङ्गीकरोति। औदुम्बरायणस्तु नामाख्यातोपसर्गनिपाताः नित्या इत्येवोच्यते। परन्तु शब्दः न सर्वत्र व्याप्तः। अर्थात् उद्भूतानां चतुर्विधपदानां तत्तदिन्द्रियेषु स्थितत्वात् विनष्टत्वाच्च अनित्यानि इति आक्षेपकारा वदन्ति। चतर्विधोऽपि शब्दः एककाले नोच्चरितुं शक्यते खलु। एवं स्थिते कथं वा एभिः शब्दैः उपसर्गा वा प्रत्यया वा संयुज्यन्ते ? "अयुगपदुत्पन्नानां वा शब्दानां इतरेतरोपदेशः"[15] ; "शास्त्रकृतो योगश्च"[16] इति च निरुक्ते एव आक्षेपकाराणां मतं निरूपितम् यत्- एकस्य पदस्य अन्येन संयोगो जायते चेत् कथं वा तत्र नित्यत्वं शब्दे वक्तुं शक्यते? इति आक्षेपकाराः शब्दस्य अनित्यत्वमारोपयन्ति।

उपर्युक्तस्याक्षेपस्य यास्कः तत्रैव समादधाति "व्याप्तिमत्वात्तु शब्दस्य"[17] इत्यनेन शब्दः व्याप्तिमत् इति अर्थः अत्र फलति। स शब्दः नित्य एवेति यास्कः तस्य मतं निरूपयति। दुर्गाचार्यभाष्ये एवं दृश्यते- "विनाशपक्षे पुरुषप्रयत्नोपजनितात् वक्त्रोद्धतात् परस्यार्थप्रत्ययमाधाय

---

[14] अष्टाध्यायी ४।१।१०१

[15] निरुक्तम् १।२।२

[16] निरुक्तम् १।२।३

[17] निरुक्तम् १।२।४

शब्दव्यक्तय एव ध्वंसन्ते न तु शब्दाकृतयः। तास्तु तया अभिधानशक्त्या बुद्धिद्वारेणावस्थिताः प्रकाशन्त्यः स्थिता एव भवन्ति तासु साक्षात्पदपरिसंख्यानं वर्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्यते इति व्याप्तिमत्वादित्यनेनैव इतरेतरोपदेशः प्रयुक्तः। शास्त्रकृतो योगश्च नामाख्यातरूपबुद्धितत्त्वे सत्त्वक्रियाविषये गुणप्रधानभावेनातिष्ठेत्। तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्यते। तथा च धातुरूपा बुद्धिः तदर्थरूपया बुद्ध्या संयुज्यते। बुद्धिरेव हि धात्वादिरूपेण विपरिणममाणेन शास्त्रेण संस्क्रियते। तस्यां च संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते। तदभिधायकत्वाच्छब्दस्य। नित्यत्वपक्षेऽपि युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्नास्तीति यदुक्तपूर्वं तदप्यनैकान्तिकं दृष्टान्तभूतम्। दृष्टो हि एकस्मिन्नेव काले गुणप्रधानभावो युगपदुत्पन्नयो राजपुत्रामात्यपुत्रयोरिति एतदनुपदं स्फुटयति" इति। अर्थात् अस्माकं हृदयान्तर्गता आकाशप्रतिष्ठिता च बुद्धिः अभिधानाभिधेयरूपेण वर्तते। तया बुद्ध्या पुरुषः शास्त्राभिमतं प्रयोजनं ज्ञातुं ज्ञापयितुं च स्वप्रयत्नेन तस्य उरःकण्ठादिस्थानेषु शब्दम् उत्पादयति। एवं निष्पादितः शब्दः बहिरागत्य श्रोत्रेन्द्रियात् श्रोतृणां बुद्धिं व्याप्य अविनाशिव्यक्तीभावबोधने सः व्याप्तिं साधयति इति "व्याप्तिमत्वात्तु शब्दः" इतीदं यास्कमतवाक्यं बोधयति। अत एव पदचतुष्टयं न अनित्यम्। किन्तु पदचतुष्टयं विना पुरुषबुद्धिं व्याप्य अर्थं स्फुरितुं न शक्यते। तद्रूपां व्याप्तिं नश्वररूपः अनित्यश्च शब्दः न कर्तुं शक्यते। पुरुषोद्भूतः शब्दः नश्यतीति

चेत् तच्छब्दः कथं वा श्रोतृबुद्धिं व्याप्य अर्थं स्फुरयति ? एतत्तु असम्बद्धमेव। अत एव शब्दः नित्यः इति यास्कः तस्य मतं सिद्धान्तितवान्।

एवं मुख्ये शास्त्रत्रये शब्दस्य स्वरूपं निरूप्य इतरेषु शास्त्रेषु शब्दस्य नित्यत्वसिद्धावपि यास्कस्य मतानुसारेण शब्दस्य नित्यत्वं तस्यैव शैल्यां प्रतिपादितम्। किन्तु वैयाकरणनैयायिकयोः मतयोः शब्दः अक्षररूपी भवति। परन्तु निरुक्तबोधितः शब्दः हृदयव्यापी भवतीति अस्मात् प्रकरणविशेषात् ज्ञायते। इदानीं तावत् तच्छब्दस्य निर्वचनप्रक्रियां तत्क्रमञ्च उद्दिश्य तद्विषयकचर्चां कर्तुं अग्रगेषु अध्यायेषु प्रयत्नः जायते।

## चतुर्थोऽध्यायः

# निर्वचनक्रमविचारः

निरुक्तशास्त्रे शब्दस्य प्रामुख्यं स्वरूपञ्च ज्ञात्वा प्रकृते अध्याये यास्कस्य निर्वचनक्रममधिकृत्य प्रस्तापः क्रियते। तत्पूर्वं वेदमन्त्रोक्तशब्दानां निर्वचनं कर्तुं प्रसङ्गवशात् वेदोक्तमन्त्राणामर्थीकर्तुं शक्यते वा न वा इति विषयमधिकृत्य निरुक्तोक्तरीत्या एव किञ्चित्प्रस्तूमः। किन्तु वेदमन्त्राः अर्थवन्त इति निर्धारणादनन्तरमेव मन्त्रोक्तानां शब्दानां निर्वचनं कर्तुं शक्यते। अत एवात्र प्रथमं वेदमन्त्रविचारः किञ्चित्प्रस्तूयते।

### वेदमन्त्रार्थविचारः

यास्कस्य काले वेदमन्त्राः सर्वेषां न सुलभबोधाः। स तु अंशः निरुक्तादेव ज्ञायते। वेदस्य अतिपुरातनत्वम् अस्मादेव ज्ञायते। एवं वेदार्थपरिज्ञानाभावात् वेदस्य केवलानुपूर्वीपरमफलम् विना कोऽपि वाच्यवाचकार्थ एव नास्तीति केचन वदन्ति। एतेषु कौत्सः प्रधानः। मन्त्रस्य वाच्यवाचकार्थाभावे तत्र निरुक्तेः अवकाशः नास्त्येव। अर्थवत एव पदसमूहस्य निरुक्तिः वक्तुं शक्यते। परन्तु वेदमन्त्राणां अर्थ एव नास्तीति चेत् कथं वा निर्वक्तुं शक्यते? इति कौत्सानां वादः। "यदि मन्त्रार्थप्रत्ययाय

अनर्थकं भवतीति कौत्सः। अनर्थका हि मन्त्राः"[1] इति कौत्सस्य मतं यास्कः तस्य निरुक्ते दर्शितवान्" इति। एवमेव तेषां वादं अधोलिखितरूपेण सङ्गृहीतवानयं यास्कः-

1. वेदमन्त्रः नियतरूपम् अभिधानं आनुपूर्वीं च स्वयं भवति। तथा हि- "नियतवाचोयुक्तयः नियतानुपूर्व्या भवन्ति"[2] इति निरुक्ते एव तत्सम्बद्धं वाक्यं दृश्यते। नियताभिधानस्योदाहरणाय मन्त्रः तत्रैव यास्केन उदाहृतः। स च मन्त्रः "अग्न आयाहि वीतये" इति। अयं मन्त्रः न कुत्रापि "विभावसो आगच्छ पानाय" इति दृश्यते। एवमेव नियतानुपूर्वीं च उदाहरति। तन्मन्त्रस्तु "अग्न आयाहि वीतये" इत्येव उच्चरणीयम्। स तु "आयाहि अग्ने वीतये" इति वा "वीतये आयाह्यग्ने" इति वापि नोच्चरितुं शक्यते। अर्थयुते व्यवहारे आनुपूर्व्यपि न वर्तत एव। अस्मात् कारणात् मन्त्रस्यानुपूर्व्यैव प्रधानः न तु अर्थः इति कौत्सानां मतम्।

2. वेदमन्त्राणां अर्थसंज्ञाः सत्यपि ब्राह्मणग्रन्थाःताननवगम्य मन्त्रान् क्रियासु विनियुज्यन्ते। स्वतः मन्त्रस्य अर्थः वर्तते चेत् कथं वा ब्राह्मणानि अर्थं निरस्य मन्त्रान् क्रियासु विनियुज्यन्ते? ब्राह्मणानि

---

[1] निरुक्तम् १।१५।२

[2] निरुक्तम् १।१५।३

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

मन्त्रविनियोगं विधीयन्ते। तेन मन्त्रेषु अर्थवत्वं भवतु। परं स्वयं मन्त्राणां अर्थवत्त्वं नास्त्येव इति द्वितीयः।

3. मन्त्रेष्वर्थः अनुपपन्नो भवत्येव। "अथापि अनुपपन्नार्था भवन्ति- ओषधे त्रायस्वैनम्, स्वधिते मैनं हिंसीः इत्याह हिंसन्"[3] इत्येतेषाम् अर्थज्ञानमसाध्यम्। "हे ओषधे ! इदं त्रायस्व" इत्युक्ते अर्थः अनुपपन्न एव। किन्तु स्वयं त्रातुमशक्यः ओषधिः कथं वा इतरान् त्रायते? स्वयं हिंस्य "स्वधिते ! इमं न हिंसीः" इति वाक्यं कथं वक्तुं सूक्तं भवेत्? एवमुक्त्वा स्वयं हिंसनम् सूक्तं वा? अतः उन्मत्तवाक्यानां लोके अनर्थत्वमेव कल्पनीयमिति तृतीयः।

4. परस्परविरुद्धोऽर्थोऽपि मन्त्रेषु दृश्यते। यास्कः निरुक्ते एव इमं विषयं स्पष्टं दर्शयति। वेदे केषुचन मन्त्रेषु रुद्र एक एवेति भासते। इतः केषुचन मन्त्रेषु स एव रुद्रः सहस्रसङ्ख्याकः इति वर्णनं दृश्यते। एतौ द्वौ विषयौ विरुद्धार्थभासकौ एव खलु। कुत्रचिन्मन्त्रे इन्द्रः अजातशत्रुरिति प्रतिपादनं दृश्यते। अन्यत्र स एव इन्द्रः बहवः शत्रुसेनाः जितवानिति अर्थबोधको मन्त्रः दृश्यते। अत्रापि विरुद्धार्थौ भासते[4]। अस्मादपि मन्त्रा अनर्था इति स्पष्टं ज्ञायते इति चतुर्थः।

---

[3] निरुक्तम् १।१५।६

[4] "अथापि विप्रतिषिद्धार्था भवन्ति- एक एव रुद्रोऽवतस्थे न द्वितीयः ; असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् ; अशत्रुरिन्द्रः जज्ञिषे ; शतं सेना अजयत् साकमिन्द्रः इति" इति (निरुक्तम् १।१५।७)।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

5. यदि मन्त्रा अर्थवन्तः तर्हि तेषामर्थज्ञानां होतुः अध्वर्युः "अग्नये समिध्यमानाय अनुब्रूहि" इत्यनेन मन्त्रेण तस्य सम्प्रेषणं न करोति स्म। तत्समये एतत्कर्तव्यम् इति ज्ञातस्य होतुः अध्वर्युना सम्प्रेषणम् असमञ्जसम्। अतोऽपि मन्त्रा न अर्थवन्त इति पञ्चमः।

6. वेदे असम्बद्धाः मन्त्रा अपि दृश्यन्ते-

**"अदितिर्द्यौः अदितिरन्तरिक्षम्**
**अदितिर्माता स पिता स पुत्रः।**
**विश्वेदेवा अदितिः पञ्चजनाः**
**अदितिर्जातम् अदितिर्जनित्वम् ॥**[5] इति।

अस्मिन् मन्त्रे अदितिस्सर्वमित्युक्तम्। द्यौरूपा अदितिः कथं वा अन्तरिक्षं भवितुमर्हति। एवमेव माता अदितिः कथं वा पिता च पुत्ररूपेण भवितुमर्हति। एतत्सर्वं परस्परासम्बद्धत्वमेव। अत एव मन्त्रा अनर्थका इति षष्ठः।

7. अथापि तत्र वेदे अनेकानां शब्दानां अर्थ एव स्पष्टं न ज्ञायते। अम्यग् , यादृश्मिन् , जारयायि , काणुका इत्यादयः शब्दाः अस्य उदाहरणम्। केषाञ्चिदेव पदानाम् अर्थवत्त्वं केषाञ्चित्तु

---

[5] ऋक्संहिता १।६।१६।५

अनर्थकत्वकल्पनम् अयुक्तम्। अत एव मन्त्रा अनर्थका इति सप्तमः।

एवं प्रकारेण यास्कस्य काले वेदमन्त्रविषये प्रचलितानां दुरभिप्रायाणां सङ्ग्रहः निरुक्त एव दृश्यते। तत्रैव तान् दुरभिप्रायान् प्रदर्श्य यास्कः सोदाहरणान् तान् समादधाति। तत्समाधान एव वेदमन्त्रसम्पत्तिविषये सिद्धान्तः। मन्त्रार्थविषये यास्कस्य सिद्धान्तवादमत्र एवं सङ्गृहीतुं यतते-

1. ये शब्दाः लोकरूढौ सन्तः त एवात्र वेदे प्रयुक्ताः। गोशब्दः लोकरूढौ अस्त्येव। स एव शब्दः अत्र प्रयुक्तः। लोके गोशब्दस्य अर्थसम्पत्तिः वर्तत एव। रूढौ अर्थपूर्णस्य गोशब्दस्य अनर्थकत्वप्रतिपादनम् अकारणम् असमञ्जसम् च। अत एव मन्त्रा अर्थवन्त इति निरुक्ते एव प्रतिपादितम्। यथा- "अर्थवन्तः शब्दसामान्याः"[6] इति। अस्मादेव यास्कस्य काले संस्कृतं व्यावहारिकभाषा आसीदिति स्पष्टं ज्ञायते।

2. ब्राह्मणग्रन्थाः मन्त्राणामर्थवत्त्वमेव दर्शयन्ति। तत्तत् प्रकरणोचितं निर्दिष्टं मन्त्रं ब्राह्मणानि विनियुज्यन्ते। विवाहविनियुक्तेऽस्मिन् मन्त्रे-

---

[6] निरुक्तम् १।१६।१

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**"इहैव स्तं मावियौष्टं विश्वमायुर्वश्नुतम्।**

**क्रीळन्तौ पुत्रैः नप्तृभिः मोदमानौ स्वे गृहे ॥**[7] इति।

युवां द्वौ स्वगृहे हर्षमनाः भूयास्ताम्। युवयोः वियोगो न भूयात्। पूर्णायुरनुभूयताम्। पुत्रपौत्रैः क्रीडताम् इति आशीर्वचनवाक्यानि मन्त्रे भवन्ति। इमं मन्त्रं विवाहे विनियोक्तव्यम् इति ब्राह्मणानि विधीयन्ते। कथं वा ब्राह्मणानि अनर्थवतां मन्त्राणां विनियोगं विधितुं शक्यन्ते? अर्थवतामेव मन्त्राणामत्र विधिः दृश्यते। मन्त्रा अनर्था इति मतम् दुर्मतमिति यास्कमतम्।

3. नियतानुपूर्वी वा नियतशब्दप्रयोगो वा मन्त्रः अनर्थको न भवितुमर्हति। "इन्द्राग्निः" "पितापुत्रः" प्रभृतयः शब्दाः लौकिकशब्दकदम्बेऽपि नियतप्रयोगाः दृश्यन्ते।

4. मन्त्रस्य अनुपपन्नार्थोऽपि न वर्तते। स्वयं हिंस्य "मैनं हिंसीः" इत्युक्तिः नानुपपन्नार्थः। यज्ञोपयुक्ताः ओषधिः, वनस्पतिः, पशुः, मृगः, पक्षिः इत्यादयः उत्कृष्टं स्थानं प्राप्यन्ते इति वेदः बोधयति। यज्ञकृतो वधः न हिंसा इति वेद एव उपदिशति। यथा- "यतो एतदनुपपन्नार्था भवन्तीति आम्नायवचनात् अहिंसा प्रतीयेत"[8] इति। एवमेव मनुसंहितायां "यज्ञवधो अवधः" इत्यपि विधिः

---

[7] ऋक्संहिता १०।८५।४२

[8] निरुक्तम् १।१६।६
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

दृश्यते। एतत्तु वाक्यं श्रुतिबद्धमेव। अतः मन्त्रोऽनर्थ इति कृतनिन्दा असम्बद्ध एव।

5. एवमेव वेदस्य प्रतिषिद्धार्थ एव नास्ति। परं वेदस्यार्थः अतिगम्भीरः दुस्तरश्च भवति। इन्द्रस्य शत्रुरेव नास्तीति वाक्यस्य इन्द्रः शतं सेना अजयत् इति वाक्यस्य वैरुध्यमेव नास्ति। किन्तु शत्रुसंहारानन्तरमेव जेतारः शत्रुर्नास्तीति वाक्यं प्रयुङ्क्तः। एवम्भावे कथं वा वैरुध्यं भवेत्? यास्कस्य कथनानुसारं इन्द्रस्य केवलयुद्धरूपस्तुतिः वर्तते न तु इन्द्रस्य शत्रुः न वा युद्धः जातः। महाभाग्ययोगेन एक एव देवता बहुधा स्तूयते। अनेका अपि देवता एका एव भवति इति वाक्यं भगवद्गीतायामेवमुक्तम्-

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।**

**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥**[9] इति।

लौकिकप्रयोगेऽपि अयं सुविदित एव। "असपत्न अयं ब्राह्मणः" इति इदं वाक्यम् केवलबलिष्ठानां शत्रूणामभावं बोधयति। किन्तु अजातशत्रुः न कुत्रापि भूयते[10]।

6. अध्वर्युविधिज्ञस्य होतुः सम्प्रेषणादेव वेदस्य मन्त्रार्थवत्त्वं विनश्यतीति न वक्तुं शक्यते। किन्तु लौकिकशब्दानाम् अर्थवत्त्वं

[9] भगवद्गीता ९।१५

[10] मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । उत्पद्यन्ते त्रयः पक्षाः मित्रोदासीनशत्रवः ॥ इति ।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

सर्वैरप्यङ्गीकृतम्। एतादृशलौकिकशब्दा अपि एवमेव प्रयुक्ताः खलु ! एवं प्रयोगमात्रादेव तेषां शब्दानाम् अर्थवत्त्वं विनष्टं वा? सर्वज्ञं गुरुं स्वगोत्रमुक्त्वा शिष्या अभिवादनं कुर्वन्ति। अयं मधुपर्क इति ज्ञानेऽपि "मधुपर्को मधुपर्को मधुपर्कः" इत्येवोक्त्वा समर्पयन्ति। तस्मात् प्रयोगात् यथा लौकिकानां शब्दानां अर्थवत्त्वे न हानिः तथैव वेदमन्त्राणामपि हानिर्न जायते।

7. मन्त्राः "अदितिस्सर्वम्" इत्युच्यन्ते। अस्मात् प्रयोगात् मन्त्रा असम्बद्धा इति वादः असम्बद्धः। अत्र विरोध एव नास्ति। किन्तु अनेकोपकारकृतां "त्वमेव माता, त्वमेव पिता" इत्याद्युक्तिः लौकिकव्यवहारे प्रसिद्ध एव। शास्त्रे शब्दप्रवृत्तिः मुख्या गौणा चेति द्विधा विभक्ता। यत्र मुख्या प्रवृत्तिः नान्वेति तत्र गौणा वृत्तिं आश्रयणीयम्। अतः "अदितिः सर्वम्" इत्यत्र गौणां वृत्तिं कल्पनीयम्।

8. वेदराशेः केचन मन्त्राः अविस्पष्टशालिन इति वादोऽपि न युक्तः। यदि अन्धः यूपं न पश्येत् तर्हि तत्र कस्य दोषः युपस्य वा अन्धस्य? एवमेव तत्तत्क्रमे वेदपाठहीनस्य मन्त्रार्थः न ज्ञायते। अयं तु न मन्त्रस्यापराधो भविष्यति। साक्षात्पुरुषापराध एव। नानाविद्यानां कुशलाः लोके भवन्तीति विषयः सर्वत्र प्रसिद्ध एव। एवमेव मन्त्रार्थविद्यायामपि प्रवीणाः भवन्ति। ते एव मन्त्रार्थं वक्तुमर्हन्ति। तत्रापि काश्चन क्लिष्टशब्दानपि अर्थीकुर्वन्ति। ततः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

एतेषां शब्दानाम् अर्थपरिज्ञाने अपरिज्ञाने च पुरुषा एव कारणाः न तु तत्र मन्त्रापराधः[11]।

एवं प्रकारेण यास्कः मन्त्राणाम् अर्थाभाववत्त्ववादं निरस्य तेषामर्थवत्त्वं सिद्धान्तितवान्। आचार्यपरम्परया ज्ञानसाक्षात्कर्तारः बहुश्रुताः मन्त्रविज्ञानशालिनो भूत्वा सकलार्थान् ज्ञायन्ते इति यास्काचार्याणां सुमतम्। अत एव यास्कः वेदमन्त्राणां अर्थसम्पत्तिरस्तीति सिद्धान्तीकृत्य निरुक्तशास्त्रस्य आरम्भम् अस्मिन् प्रकरणे समर्थितवान्।

इदानीं वेदमन्त्रार्थविचारे यास्कस्य सिद्धान्तमुक्त्वा मन्त्रार्थनिर्णये सिद्धान्तं दृष्टवन्तः। वेदमन्त्रार्थे एव एतावद्दोषान् वेदार्थतत्त्वविरोधिनो सूचयन्ति। मन्त्रार्थविचारे दोषपरिहारानन्तरं वेदे उक्तमन्त्रः कां देवतां स्तौति? कस्याः वा देवतायाः स्तुतिः अस्मिन् मन्त्रे कृता? इति प्रश्नमुद्दिश्य यास्कः पूर्वपक्षमुक्त्वा सर्वपक्षानुकूलतया सिधान्तं स्थापयति। तं विचारम् अग्रगे विभागे पश्यामः।

## मन्त्रदेवतानिर्णयः

मन्त्रस्यार्थविधिं ज्ञात्वा अस्य मन्त्रस्य का वा देवता इति विषयमधिकृत्य किञ्चित् प्रस्तूमः। मन्त्रदेवतायाः अज्ञानेन मन्त्रस्य प्रयोगः अयुक्तः इति गुरवो वदन्ति। तन्मन्त्रदेवताविधिम् अधकृत्य आचार्यो यास्कः

---

[11] "यतो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधः । यदेनमन्धो न पश्यति पुरुषापराधः स भवति । यथा जनपदीषु विद्यातः पुरुषविशेषो भवति । पारोवर्यवित्सु तु खलु वेदितेषु भूयो विद्यः प्रशस्यो भवति" (निरुक्तम् १।१६।१०) इति निरुक्ते एव स्पष्टीकृतम् ।

तस्य निरुक्ते विस्तारेण प्रस्तुतवान् भवति। यथा देवतास्तुत्या पुरुषः अपेक्षितार्थं लभते इति बुध्या यां देवतां स पुरुषः स्तूयते सा देवता सैव मन्त्रदेवता इति ज्ञातव्यम्[12]। केषुचन मन्त्रेषु देवता अप्रकटितैव भवति। तादृशानाम् अनादिष्टानां मन्त्राणां कथं वा देवतां वक्ष्येत्? इति चेत्- "प्रकरणात् सन्दिग्धदेवतेषु देवतानियमः" इत्यनेन न्यायेन "यद्देवतः यज्ञो वा यज्ञाङ्गं वा तद्देवता भवति"[13] इति यास्कः बोधयति। अर्थात् यस्मिन् यज्ञे एको मन्त्रः उपयुक्तो भवति तद्यज्ञस्य देवतैव तन्मन्त्रस्यापि देवता भवतीति ज्ञातव्यम्। एवं प्रातः सवने उपयुक्तानां मन्त्राणां अग्निः देवता इति, माध्यन्दिने उपयुक्तानां मन्त्राणाम् इन्द्रो देवता इति, तृतीयसवनमन्त्राणाम् आदित्यः देवता इति च ज्ञातव्यम् इति यास्कः सविस्तारं बोधयति।

केचित्तु- मन्त्राः न कुत्रापि यज्ञेषु प्रयुज्यन्ते। तादृशानाम् अनिर्दिष्टानां मन्त्राणां कथं देवतानिर्णयः क्रियते? इति चेत्- "उत्सन्नयज्ञो वा एषः" इति वाक्यं ब्राह्मणग्रन्थाः एतादृशानां मन्त्राणां विचार एव प्रस्तूयन्ते। उत्सन्नप्रयोगानाम् अविस्पष्टदेवतानाञ्च मन्त्राणां यज्ञेषु अनुपयुक्ते सति उपाकरण-ब्रह्मयज्ञ-जप-प्रायश्चित्तादिषु उपयुक्तत्वात् तेषां मन्त्राणां प्रजापतिर्देवता इति ज्ञातव्यमिति याज्ञिकाः तत्सन्देहं निवरयन्ति। अयं तु याज्ञिकमतसम्बद्धो विषयः निरुक्तबोधित एव। यथा- "अथ अन्यत्र यज्ञात्

---

[12] यत्कामपि ऋषिः यास्यं देवतायां अर्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवतीति दुर्गाचार्यः बोधयति ।

[13] निरुक्तम् ७।४।२

प्रजापत्याः इति याज्ञिकाः"[14] इति। परन्तु निरुक्तकाराः एतादृशान् मन्त्रान् "नाराशंसाः"[15] इत्युच्यन्ते। अर्थात् तदृशाः मन्त्राः अग्निसम्बद्धाः वा यज्ञसम्बद्धा इति नैरुक्तानाम् अभिप्रायः। नाराशंसपदस्य कात्थक्याः यज्ञ इत्यर्थं दीयन्ते। शाकपूणिः अग्निरित्युच्यते। एवं ब्राह्मणोक्तदिशा यज्ञ इत्यर्थे "विष्णुर्वै यज्ञः" इत्यनेन ते च मन्त्राः विष्णुसम्बद्धाः इत्यन्वयो जायते। एवमेव "अग्निर्वै सर्वा देवताः" इत्यनेन च ते मन्त्राः अग्निसम्बद्धाः इति ज्ञायते। एवमुक्तदिशा उत्सन्नप्रयोगानाम् अनादिष्टदेवतालिङ्गानाञ्च मन्त्राणाम् अग्निर्वा विष्णुरेव देवता इति ज्ञातव्यम्। अथवा यस्याः देवतायाः अधिकारे अध्ययनपाठानुक्रमे स अनादिष्टदेवतामन्त्रः स्तूयते सैव अधिकारदेवता तस्य मन्त्रस्यापि देवता भवतीति "प्रायो देवता वा" इत्यनेन ज्ञातव्यम्। अत एव तादृशा मन्त्राः यदि अग्न्यधिकारे स्तूयन्ते तर्हि अग्निर्देवता, इन्द्राधिकारे तु इन्द्र एव देवता इति देवतानिर्णयविधिः।

अत्र एकस्य दोषस्य सम्भवो वर्तते। केषुचिन्मन्त्रेषु चेतनाचेतनानां पदार्थानां स्तुतिर्जाता। एतादृशमन्त्रेषु कथं वा देवतानिर्णयः सम्भवति? इति चेत्- "अश्वप्रभृतीन्योषधिपर्यन्तानि" इति स्तुतौ अश्वादिषु चेतनत्वं वर्तते। परन्तु अक्षादीनां चेतनत्वं न वर्तत एव। एतादृशानाम् अनित्यानाम् अशुभानां पदार्थानां स्तुतिः अनर्थैव खलु? एतेषु मन्त्रेषु का वा देवता

---

[14] निरुक्तम् ७।४।३

[15] निरुक्तम् ७।४।४ (केचित् नरप्रशंसकान् मन्त्रान् नाराशंसा इत्युच्यन्ते । अनाविष्कृतलिङ्गैः मनुष्यानां स्तुतिः अनुपपन्नैव । अतः तत्प्रयोगः अयुक्त इति दुर्गाचार्यस्य वादः)

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

भवितुमर्हति? अस्य प्रश्नस्य यास्क एव स्वयं समादधाति- "महाभाग्यात् देवतायाः एक आत्मा बहुधा स्तूयते"[16] इति। अत्र यास्कः वेदोक्तं देवताबहुत्वं तासां ऐकात्म्यं च समन्वितवान्। "एक आत्मा" इत्यनेन ब्रह्मैकत्वं प्रदर्श्य इतरेषां नानादेवतानां तस्य ऐकात्मनः ब्रह्मणः प्रत्यङ्गानि विषेषणानीति यास्कः "एकस्य आत्मनः अन्ये प्रत्यङ्गानि भवन्ति"[17] इत्यनेन साधतवान्। महाभाग्ययुतः एक एव देवतात्मा एवं नानाविधः स्तुतः।

देवतानानात्वं वेदे एव सिद्धम्। त्रिस्थानस्थानां विशिष्टानां हविर्वहन-रसानुप्रदान-रसादानलक्षणयुतानाम् अग्नीन्द्रसूर्यानां देवतात्रितयानां समर्थनं वेदे एव सिद्धम्। परन्तु स एव वेदः देवतायाः ऐकात्म्यमपि वोधयति। अधोदत्तमन्त्रेण स विषयः स्पष्टं ज्ञायते-

**इन्द्रं मित्रं वरुणमग्निमाहुः**
**अथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्ति**
**अग्निं यमं मातरिश्वानमाहुः ॥**[18] इति।

इदं च ऐकात्म्यम् असत्यमिति न वक्तुं शक्यते। यथा घटादीनां मृत्तिकेन सह अनन्यत्वं सिध्यति तथैव महत्तमेन आत्मरूपेण इतरेषां देवतानां अनन्यत्वमपि सिध्यति। अङ्गानि अङ्गिनं न अतिक्रमन्ति महत्तमेन

---

[16] निरुक्तम् ७।४।८

[17] निरुक्तम् ७।४।९

[18] ऋक्संहिता १।१६४।४६
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

सह न वियुज्यन्ते च। स च महान् आत्मा अङ्गप्रत्यङ्गादिभावैः व्यूहमनुभूय स एक एव आत्मा बहुधा स्तूयते इति। एवं प्रकारेण देवतानां नानात्वम् एकत्वञ्च सिद्ध्यति[19]।

परन्तु अश्वादीनां वर्णनं कथं वा सिद्ध्यतीति? प्रश्नस्य यास्कः एवमुच्यते- "अपि च प्रकृतिभूमिभिः ऋषयः स्तुवन्तीत्याहुः"[20] इति, "प्रकृतिसर्वनाम्याच्च"[21] इति च।

ऋषयः प्रकृतिविकृत्योरभेदेन स्तुवन्तः। "स एष महान् आत्मा सत्ता लक्षणः तत्परं तद्ब्रह्म स भूतात्मा स भूतप्रकृतिः" इत्यनेन सर्वस्य प्रकृतिरूपं महानात्मानं स्तूयते। स एव कारणं शेषाः कार्याणि कार्यकारणे अनन्ये एव। अत एव कार्यरूपाः अश्वाक्षादिषु कारणवस्तोः महिमानं ऋषयो वर्णितवन्तः। समस्तानि स्थावरजङ्गमानि एनम् आत्मानमिव वर्तन्त इति ज्ञात्वा "मूलेभ्यः स्वाहा" "शाखाभ्यः स्वाहा" इति तमेवात्मानं स्तुतवन्तः[22]। एवं न केवलम् अश्वादय एव देवता इव स्तुतवन्तः। अत्र तैः

---

[19] यद्यपि इन्द्रादयस्तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेणावस्थानादविरोधः तथा च मन्त्रवर्णः 'इन्द्रं मित्रं वरुणमग्निं' इत्यादि वाजसनेयिनश्चामनन्ति- "तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे दवाः" (बृहदारण्यकोपनिषत् १।४।६) इति । तस्मात् सर्वैरपि परमेश्वर एव हूयते । [ऋग्भाष्यभूमिका, सायणाचार्यः]

[20] निरुक्तम् ७।४।११

[21] निरुक्तम् ७।४।११

[22] अपर्यवसानया वृत्त्या सर्वे शब्दाः तत्तद्वस्तुद्वारा अन्तर्यामिनं परमात्मानं अन्विता भवन्तीति भगवान् सर्वशब्दवाच्य इति वेदान्तिनो वदन्ति ।

रूपैः स एव महान् आत्मा स्तुतवान्। किन्तु तस्य नाम सर्वत्वेन वर्तते। सर्वाणि नामानि तस्मिन्नेव अन्वितानि। अत एव- "आत्मैवैषां रथो भवति आत्मा अश्वः आत्मा आयुधम् आत्मा इषवः आत्मा सर्वं देवस्य देवस्य"[23] इति यास्काचार्यो उक्तवान्। एकैक एव महानात्मा एवं बहुमुखरूपेण जायते। अत एव तस्य बहुमुखानि नामानि वर्तन्ते। सत्त्वाः अश्वादयः, द्रव्यरूपाणि अक्षरथप्रभृतीनि तस्य एव आत्मरूपिण इत्युक्त्वा रथादिस्तुतिभिः स महान् आत्मा स्तूयते। इत्येवं प्रकारेण यास्कः मन्त्राणां देवताविचारं समर्थितवान्।

मन्त्रदेवताविचारसमर्थनानन्तरं वृत्रवधविचारं किञ्चित् चिन्तयामः। किन्तु लोके वृत्रवधो नाम देवताया इन्द्रस्य राक्षसस्य च वृत्रस्य मध्ये जातः एकः युद्धः इति प्रसिद्धः। परन्तु तन्न इति यास्कः वक्तुमुद्यतः। मन्त्रैः अत्र देवताः स्तुत्वा तत्र इन्द्रः वृत्रेण सह युद्ध एव नाकरोत् इति उच्यते चेत् कथं वा तस्य समन्वयः जायते? इति प्रश्नः उद्भवत्येव। तत्संशयनिरासार्थम् अग्रगे अध्याये वृत्रवधः विचार्यते।

## वृत्रवधविचारः

इन्द्रः तस्य शत्रुं वृत्र इत्यसुरं मारितवान् इति लोके प्रसिद्धो विषय एव। वेदेऽपि बहुत्र इन्द्रो वृत्रं मारितवानिति विषयः दृश्यते। केचित्तु वृत्रम्

---

23 निरुक्तम् ७।४।१५

असुर इति वर्णयन्ति। केचित्तु तमेव वृत्रं मेघ इत्युच्यन्ते। इममेव अंशं यास्कः तस्य निरुक्ते सुप्रत्येकं विवेचयति। यथा-

**"तत् को वृत्रः? मेघ इति नैरुक्ताः।**

**त्वाष्ट्रो असुरः इति ऐतिहासिकाः।**

**अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणः वर्षकर्म जायते।**

**तत्र उपमार्थेन युद्धवर्णा भवन्ति।**

निरुक्तकारोक्तदिशा वृत्रो मेघ इति चेत् वेदमन्त्रेषूक्तयुद्धस्य कोऽर्थः? इति प्रश्नस्य यास्क एव समादधाति। तथा हि- "इन्द्राख्येन वाय्वा अवेष्टितायाः विद्युज्ज्योतेः मेघोदरान्तर्गतेन जलांशेन सह सङ्घर्षणात् वृष्टिर्जायते। उदकतेजसोः इतरेतरप्रतिद्वन्द्वित्वात् तत्र कथारूपेण युद्धकल्पनं कृतम्। तत्र प्रकृते यथाभूतो युद्ध एव नास्ति। इन्द्रस्य शत्रुरेव नास्तीत्युक्ते तत्र कथं वा युद्धः सञ्जायते? इमं विषयं ऋग्वेदः एवमुच्यते। यथा-

**यदचरः तन्वा वावृधानः**

**बलानि इन्द्रप्रब्रवाणो जनेषु।**

**मायेत्सा ते यानि युद्धन्याहुः**

**नाद्यशत्रुं ननु पुराविवित्से ॥**[24] इति।

"हे इन्द्र ! त्वं नानारूपं धृत्वा तत्रापि विग्रहयुतो भूत्वा भवतः आत्मीयं वीर्यं जनेषु प्रचारीकर्तुं चरति। नानाप्रकारस्य युद्धस्य तव

---

[24] ऋक्संहिता १०।५४।२

प्रदर्शनमिति च जनैः कल्पनमपि तव मायैव। तव शत्रुः अद्यापि नास्ति नासीदपि च। इमं रहस्यं त्वमेव मन्यसे" इति अस्य मन्त्रस्यार्थः फलति। अत एव देवासुरकल्पनम् अयथार्थम्। निरुक्तेऽपि "तस्मादाहुः नैतदस्ति तद्देवासुरम्" इति वाक्यं द्रष्टुं शक्यते। परन्तु तत्र युद्धवर्णनं सर्वमपि वृत्र इत्येव वर्णितं वा? इति चेत्- केवलवृत्र इत्येव न भवति इति यास्कस्य निरुक्ते एव दृश्यते। यथा-

**अहिवत्तु खिलं मन्त्रवर्णा ब्राह्मणवादश्च।**

**अविवृद्धया शरीरस्य सूत्रांसि निवारयाञ्चकार।**

**तस्मिन् हते प्रसस्यन्दिरे आपः।**"[25] इति।

इमम् असुरं वृत्र इव अहिरिवापि मन्त्रेषु दर्शितः। शास्त्रान्तरेषु ब्राह्मणेष्वपि इमं राक्षसं वृत्र इति अहिरिति च वर्णितम्। अयं वृत्रः वर्धितशरीरो भूत्वा वृष्टिं विरराम। तस्य वृत्रस्य शमनानन्तरं जलं वर्षितम्। अत एव वृत्रशब्दस्य मेघ इत्यर्थः वक्तव्यः। वृत्रवधानन्तरं वृष्टिर्ववर्ष इति अधस्तनेन मन्त्रेण ज्ञायते।

**"दासपत्नीः अहिगोपाः अतिष्ठन्**

**निरुद्धाः आपः पणिनेव गावः।**

**अपां बलं अपिहितं यदासीत्**

**वृत्रं जघन्यान् अप तद्ववार ॥**"[26] इति।

---

[25] निरुक्तम् २।१६।३

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

"यथा व्यापारिणा क्रयार्थाः पशवः मार्गे नियच्छन्ति। तथैव जलं निरम्य मेघे गूढमतिष्ठत्। जलनिर्गमद्वारः मेघावृतोऽभवत्। यदा इन्द्रः तन्मेघं हतवान् तदैव वृष्टिः अभवत्।" इत्यर्थः उक्तमन्त्रस्य फलति।

एवं प्रकारान् मन्त्रान् यास्कः निरुक्ते उदाहृत्य तस्याभिप्रायं समर्थितवान्। एवं निरुक्तकारस्य अभिप्राये वृत्रशब्दस्य मेघ एव नासुर इति तत्रैव निर्णयो जायते।

एवमेव वृत्रवधविचारे अनेके अभिप्रायभेदाः सन्ति। तेऽत्र क्रमेण सूचिताः –

1. यास्कादीनां नैरुक्तानामभिप्राये स मेघमर्दनं वर्षकर्म च। पाश्चात्याः इमं विषयं "Storm Theory" इत्युच्यन्ते। एतेषां मतानुसारेण पर्वत अथवा गिरिरित्यस्य शब्दस्य मेघ इत्यर्थः सम्भवति। अस्य विमर्शनेन वृत्रवधेन सहोक्ता इतरे केचिदंशाः गमनार्हाः भवन्ति।

**स माहिन इन्द्रो अर्णो अपाम्**

**प्रैरयदहिहाच्छा समुद्रम्।**

**अजनयत्सूर्यं विदद्गा**

**अक्तनाह्नां वयुनानि साधत् ॥**[27] इति।

---

[26] ऋक्संहिता १।३२।११

[27] ऋक्संहिता ११।१९।३
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

महनीयो इन्द्रः मेघं हतवान्। मेघस्य जलप्रवाहसागरगमनमभवत्। स एव इन्द्रः गुहे गविषाणां गवां त्रातुं सूर्यं सृष्टवान्। तथा पणिभिः अपहृतान् पशून् अत्रायत्। तस्य तेजसा दिनस्य प्रज्ञानान् वा प्राणान् असाधयत्" इति मन्त्रस्यार्थः। दर्शिते मन्त्रे त्रयः अंशाः सूचिताः। एते त्रय अंशाः यास्कस्य अभिप्राये नान्तर्भवन्ति। तेन वृत्रवधस्य अन्ये तेषामर्थं कल्पयन्ति।

2. एतेषां अन्यपाश्चात्यानां मते तु वृत्रवधस्य सूर्योदय इति कल्पनं दृश्यते। इमं विषयं एते "Dawn Theory" इति नामकुर्वन्ति। एतेषाम् उक्त्यनुसारेण अत्र इन्द्र एव सूर्यः वृत्ररूपं तमसं हतवानिति अर्थः सम्भवति।

3. ऐतिहासिकास्तु आर्यनायको इन्द्रः अनार्यनायकं वृत्रं युद्धे मारितवानिति कल्पयित्वा वृत्रवधं समर्थयन्ति।

4. भारतीयो विद्वान् बालगङ्गाधरतिलकः वृत्रवधस्य अन्यमर्थं कल्पयति। ध्रुवप्रदेशस्य ज्योतिस्तमसोः युद्धसम्बद्धे दीर्घरात्रौ जाते उषःकाले, सूर्योदये, लोके सर्वत्रावृतस्य जलसञ्चारस्य निर्मूलने च अस्य वृत्रवधस्य अन्वयः जायते इति एतेषां अभिप्रायः[28]।

---

[28] Arctic Home, Tilak, P.294-295

5. कृष्णयजुर्वेदे तु वृत्रवधस्य बुभुक्षाहरणमिति क्षुद्राणां दोषपूरितानां वाचां नाशनमिति अर्थः बोधितः। यथा- "उदरं खलु वै वृत्रः", "क्षुत्खलु मनुष्यस्य भ्रातृव्यः" इति। एवं "क्षुद्रं वचो अपावधीम्", "त्वेषां वचो अपावधीम्" इति च उक्तं तत्र दृश्यते।

एवं प्रकारेण वृत्रवधः केवलमेघमर्दनं न ऐतिहासिकानां मतमिव सः देवदानवयुद्धः इति यास्कः स्वयं तस्यैव निरुक्ते ग्रन्थे मन्त्रोदाहरणपूर्वकं बोधितवान्। परन्तु ऐतिहासिकानां मतमसत्यमिति यास्कः न कुत्रापि उक्तवान्। सर्वत्र सर्वशास्त्रेष्वपि अर्थारोपणे यथार्थत्वं तु न दृश्यत एव। तेषां तेषां च ज्ञानानुसारेण अर्थसम्भवत्वं दृश्यते। तदर्थबोधे सर्वत्रापि फलम् एकरूपमेवेति विषयः स्पष्टं ज्ञायते।

## देवतारूपविचारः

इतः पूर्वं वृत्रवधबोधानन्तरं वृत्रो मेघरूप इत्युच्यते चेत् इन्द्रस्य रूपं नास्ति वा इति प्रश्नः सर्वसाधारणः। अर्थात् देवतानाम् आकारः अस्ति नास्ति वा? यदि ताः साकाराः कश्च तासां स्वरूपः? पुरुषरूपा वा विग्रहरूपाश्च ते? इत्यदीन् प्रश्नान् यास्काचार्यो वेदमन्त्रान् अनुसृत्यैव परीक्ष्य विवेचयति। देवतारूपविचारे अभिप्रायद्वयं वर्तते। केचन "पुरुषविधाः स्युः" इत्युच्यन्ते। केचित्तु "अपुरुषविधाः स्युः" इत्युच्यन्ते। एवं रूपं मतद्वयं सङ्गृह्य यास्कः पूर्वप्रोक्तानां प्रश्नानां समाधानं ददाति। तद्रूपसमाधानेन एतद्विषयं सिद्धान्तयति च। पुरुष इव देवतानाम् आकारः वर्तते इति वादिनां मतसङ्ग्रहणे एवं लभते-

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

1. वेदमन्त्रेषु स्तुताः देवताः चैतन्यवन्तः। परं ताः देवताः न केवलं चैतन्यवन्तः इत्युच्यन्ते। अर्थात् देवताः गोरूपचेतनवन्तो भवन्तु न मनुष्यरूपा इत्यपि वक्तुं शक्यते। तद्दोषहरणाय "तथा अभिधानानि" इत्युदाहृत्य देवतानां पुरुषाभिधानानि नामानि दत्तानि। एतानि च नामानि अर्थसम्बद्धानि भवन्ति। अत एव देवतानां पुरुषाकारो वर्तत इति मन्तव्यम्।

2. देवतानां पुरुषाकारः वर्तत इति पुरुषसमानानि अङ्गानि वर्तन्त इति च वेदस्थस्तुतिभिरेव ज्ञायते। मनष्या इव देवतासु ऊरुबाहुमुष्ट्यादयः वर्णिताः। यथा-

**ऊरुं नो लोकमनुनेषि विद्वान्**

**स्वर्वज्ज्योतिरभयं स्वस्ति।**

**ऋष्वात इन्द्रस्थविरस्य बाहू**

**उपस्थेयाम शरणा बृहन्ता ॥**[29] इति।

हे इन्द्र ! इमं विस्तारं लोकं ज्ञात्वा अस्माकं सुकृतीन् अनुग्रहसि। सूर्यसमानतेजसा लोकं स्वस्तकरोति। शत्रुध्वंसकं, विस्तृतं, महत्तरम्, आश्रयणीयं च तव दोर्दण्डम् आश्रयामहे इति अस्यार्थः फलति। अनेन मन्त्रेण ज्ञायते यत् इन्द्रः शरीरवान् इति।

---

[29] ऋक्संहिता ६।४७।८
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

3. "अथापि पुरुषविधिकैः द्रव्यसंयोगैः"[30] इत्यनेन पुरुषाकारवतां देवतानां ताभिः द्रव्यसंयोगमुद्दिश्यापि मन्त्रा वर्णयन्ति। यथा-

**आद्वाभ्यां हरिभ्यां इन्द्रियाहि**

**आचतुर्भिः आषड्भिः हूयमानः।**

**अष्टाभिः दशभिः सोम पेयम्**

**अयं सुतः सुमख मा मृधस्कः ॥**[31] इति।

**अपाः सोमस्तस्तमिन्द्र प्रयाहि**

**कल्याणीर्जया सुरणं गृहे ते।**

**यत्रारथस्य बृहतो निधानम्**

**विमोचनं वाजिनो दक्षिणावत् ॥**[32] इति।

एवं एतन्मन्त्रद्वये इन्द्रस्य हरिगृहजायारथादिभिः सम्बन्धः सूचितः। अर्थात् इन्द्रस्य पुरुषाकारत्वमत्रैव सिद्धम्।

4. देवताः पुरुषाकारा इति वक्तुं देवतासु पुरुषसदृशकर्मणां विधिरेव प्रमाणमिति केचन वदन्ति। यथा-

**इदं हविः मघवन् तुभ्यं रातं प्रति सम्राळहृणानो गृहाय।**

**तुभ्यं सुतो मघवन् तुभ्यं पक्वोद्धीन्द्र पिब च प्रस्थितस्य ॥**[33] इति।

---

[30] निरुक्तम् ७।६।६

[31] ऋक्संहिता २।१८।४

[32] ऋक्संहिता ३।५३।६

[33] ऋक्संहिता १०।११६।७
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

पूर्वोक्तैः प्रमाणैः देवतासु पुरुषाकारत्वं सत्यमेवेति एतेषां मतम्। केचित्तु देवतानां अनाकारत्वं वेदप्रमाणैरेव निरूपयन्ति। तेषां वादानाम् अध्ययनेन एवं तेषां वादस्वरूपानां सारमत्र दर्शयितुं यतते-

1. अग्निवाय्वादित्यपृथिवीत्यादयः देवताः अस्माकं प्रत्यक्षाः भवन्त्येव। निरुक्ते एव तद्विषयमेवमुच्यते- "अपि तु यद् दृश्यते अपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति"[34] इति। एतेषां पुरुषाकारो नास्तीति स्पष्टमत्रैव दृश्यते। परम् एतेषां साकारत्वोक्तिः दृष्टहानिरेव। यथा अग्न्यादीनां पुरुषाकारो न वर्तते। तथापि इतरेषामपि देवतानां पुरुषाकारो नास्त्येव। देवतासु पुरुषविधाः वर्णनाः औपचारिका एव। "अपां च ज्योतिषश्च मिश्रीभावकर्मणः वर्षकर्म जायते", "तत्र उपमार्थेन युद्धवर्णा भवन्ति", "न त्वं युयुत्से" इत्यादयः सर्वे पूर्वोक्तमेवाभिप्रायं स्वीकुर्वन्ति।
2. पुरुषविधानां स्तुतीनां वर्णनेन देवताः पुरुषाकारा इति वक्तुं न शक्यते। किन्तु वेदे अचेतनानां ग्रावादीनामपि तथैव स्तुतिः दृश्यते। यथा-

**एते वदन्ति शतवत्सहस्रवत्**

**अभिक्रन्दन्ति हरितेभिरासभिः।**

---

34 निरुक्तम् ७।७।२

**विष्वी ग्रावाणः सुकृतः सुकृत्यया**

**होतुश्चित्पूर्वे हविरद्यमाशत् ॥**[35] इति।

अभिषुवेषु भूतं सोमसंयोगमत्र भोजनमिति कथितम्। ग्रावाणां कथं वा मुखोत्पत्तिसम्भवः? यथा ग्रावाणां न मुखादीन्द्रियाणि वर्तन्ते तथैव इन्द्रादीनामपि न पुरुषाकारः। तत्सर्वम् औपचारिकं कल्पनमेव।

3. पुरुषसदृशानां यद्द्रव्यसंयोगः उच्यते तदेव देवतास्वपि उक्त्या तेषां पुरुषाकारारोपित्वम् असमञ्जसम्। अधोदत्ते नदीसूक्ते नद्या रथस्य संयोगो जातः। अयं तु असम्भव एव। एवमेव इतरेऽपि स्तुतयः भवन्ति। यथा-

**सुखं रथं युयजे सिन्धुरश्विनम्**

**तेन वाजं सनिषदस्मिन्नाजौ।**

**महान्ह्यस्य महिमापनस्यते**

**अदब्धस्य स्वयशसो विरप्शिनः ॥**[36] इति।

अत्रान्तरे मुख्यार्थस्य असम्भवत्वे सर्वत्र स्तुतयः रूपप्रवादा एवेति मन्तव्यम्। अत एव देवतानां पुरुषाकारो नास्तीति निराकारवादिनां मतम्।

---

[35] ऋक्संहिता १०।९४।२

[36] ऋक्संहिता १०।७५।९

एवं परस्परविरुद्धानां कोटिद्वयानां वेदप्रामाण्यमेव भवति। यास्कः प्रत्यक्षागमयोः वैरुध्यराहित्येन तस्य निर्णयमारोपयति। यथा- "अपि वा उभयविधाः स्युः"[37] इति उच्यते। यास्काभिप्राये देवताः पुरुषाकारयुताः पुरुषरूपरहिताश्चापि भवन्ति। कथं वास्य सम्भवः? इति चेत्- "अपि वा पुरुषविधानामेव स्तं कर्मात्मानः एते स्युः यथा यज्ञो यजमानस्य"[38] इति वाक्येन समर्थयति। क्षितिजलादयः पृथिव्यादिसाकाररूपिणाम् अधिष्ठानाः। क्षितिजलादिद्रव्याणां पुरुषाकारसम्पत्तिर्नास्त्येव। परन्तु तत्तदभिमानि-देवतानां पुरुषाकारो वर्तत एव। एवं प्रकारान्वयेन सर्वविरोधोऽपि शम्यते। यास्कः तस्यैतस्य सिद्धान्तस्य इतिहास एव प्रमाणमित्युच्यते। यथा- "एष च आख्यानसमयः"[39] इति। पृथिवी ब्रह्माणं प्रार्थयित्वा क्षित्या स्त्रीरूपं गता। एवमेव अग्निः विप्रवेशे कृष्णार्जुनौ खाण्डववमनुगृहीतुं प्रार्थयामास। एतद्रूपाः दृष्टान्ताः यास्कस्य सिद्धान्तं प्रमाणीकुर्वन्ति।

पूर्वमीमांसकास्तु देवतासु अन्यरूपं न अङ्गीकुर्वन्ति। यदि साकारत्वारोपे इन्द्रस्य सर्वत्र आवाहने कथं वा स सर्वत्र भवितुं शक्यते? इति प्रश्नं कुर्वन्ति। तेन एतेषां मते देवतानां मन्त्राक्षरशरीरत्वम् आरोपितम्। तत्तन्मन्त्राक्षरोच्चारणेन फलप्रदानमेव देवतास्वरूपम् इति एतेषां पूर्वमीमांसकानां सिद्धान्तम्। अधोदत्ते श्लोके तद्विषयः वर्णितः-

---

[37] निरुक्तम् ७।७।७

[38] निरुक्तम् ७।७।८

[39] निरुक्तम् ७।७।९

**विग्रहो हविराधानं युगपत् कर्मसंस्थितिः।**

**तृप्तिः फलप्रदानं च देवतानां न विद्यते ॥** इति।

परन्तु वेदान्तिनो देवतानां विग्रहरूपत्म् आरोपयन्ति। "तदुपर्यपि बादरायणः सम्भवात्" इत्यस्मिन् ब्रह्मसूत्रे देवतानां विग्रहादिमत्त्वं "विरोधः कर्मणीति चेन्न अनेकप्रतिपत्तेर्दर्शनात्" इत्यस्मिन् सूत्रे युगपदनेकस्थानेषु देवताः स्थातुमर्हन्तीति[40] समर्थयन्ति।

एवं प्रकारेण यास्कः सर्वमतसम्मतेन सर्वमतविरोधशमनत्वेन च देवतानां पुरुषरूपसाहित्यराहित्योभयनिरुपणं सिद्धान्तीकृत्य लोके स्नेहं वर्धितवान्। एवमेतान् विषयानुक्त्वा यास्कनिरुक्ते मुख्यविषयस्य निर्वचनप्रक्रियायाः क्रमं निरूपयितुं उद्यतोऽस्मः।

एवं देवतानां रूपविचारे ताः शरीरिण्योऽपि भवन्तीति मतसिद्धान्तानन्तरम् आक्षेपकाराणां मतौ "तास्तु शरीरिण्यः देवताः कुत्र वा निवसन्ति? किं वा तासां स्थानम्? इति प्रश्नः सञ्जायते। इदं वैपरीत्यमालोच्य यास्कः तत्रैव अग्रगे भागे देवताविभागं कृतवान्। स तु विभागः अत्र पूर्वपक्षसिद्धान्तरूपेण विश्लेषयामः।

## देवताविभागः

इतः पर्यन्तं देवतानां रूपविचारमधिकृत्य प्रस्तावना कृता। एवमेव किमर्थमेक आत्मा बहुधा स्तूयते इत्यपि विषयमधिकृत्य प्रस्तुतम्। तथा च

---

[40] श्रीभाष्यम् १।३।२५,२६,२८

"पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" इत्यादिभिः मन्त्रवाक्यैः "अथातो विभूतय अस्य पुरुषस्य"; "एष इन्द्र एष प्रजापतिः" इत्यादिभिः ब्राह्मणवाक्यैरपि "आत्मैवेदं सर्वम्" इत्यनेन वाक्येन सर्वस्यात्मा अन्तर्यामी च एक एव भवतीति सधितम्। एवम् आत्मविदां समस्तवेदराशिः वाक् चापि आत्मार्थ एव भवति। किन्तु सर्वेऽपि भावाः तेनैवात्मना उपजायन्त इति ते आत्मवितः मन्यन्ते। आत्मना अन्योऽभिधेयो नास्त्येव। एवं ज्ञानार्जितानाम् आत्मविदां सर्वं आत्ममयं भवत्येव।

इदं तु साधनं त्रिप्रकारकं भवति। प्रथमो अधियज्ञः। अधियज्ञे परिणितः द्वितीयस्य अधिदैवतस्य अधिकारी भवेत्। अधिदैवते परिणितः अध्यात्मं ज्ञानं प्राप्तुमर्हति। इदमेव सर्वश्रेष्ठम्। "आत्मयाजी श्रेयान् देवयाजी वा इति, आत्मयाजी ब्रूयात्" इति लोकप्रसिद्धं वाक्यम्।

प्रथमः अधियज्ञाधिकारी तस्य पूर्वजन्मनः अविद्यया वासितान्तःकरणो भूत्वा सर्वाः देवताः तेन सर्वात्मनापि भिन्ना इति मत्वैवं विधिमन्त्रार्थवादादिरूपो वेदोऽपि इदमेव बोधयतीति मन्यते। एवं याज्ञिकेषु अन्वितानां विविधानाम् अभिधानानाम् अत्र विभागो जातः। एवं प्रकारेण देवताविभागसमर्थनं यास्केन कृतम्।

अत्र याज्ञिकास्तु यज्ञस्य प्रकरणमनुसृत्य सुकृतत्वात् नानाभिधानसिद्धौ देवता अनेकाः भिन्नभिन्ना इति वदन्ति। निरुक्तकारास्तु

देवतात्रितयं वदन्ति। "तिस्र एव देवता इति नैरुक्ताः"[41] इति; "अग्निः पृथिवीस्थानः वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः सर्यो द्युस्थानः"[42] इति च निरुक्ते एव पाठितः दृश्यते। पृथिवीस्थानदेवता अग्निः; अन्तरिक्षस्थानदेवता वायुर्वा इन्द्रः ; द्युस्थानदेवता सूर्यः इति विभागः स्थानभेदेन प्रत्यक्षचिह्नैरपि सिध्यति। अयं विभागक्रमः वेदादेव सङ्गृहीतः-

**विश्वकर्मा ह्यजनिष्ट देवः**
**आदिद्गन्धर्वो अभवद्द्वितीयः।**
**तृतीयः पिता जनितौषधीनाम्**
**अपां गर्भं व्यदधात् पुरुत्रा ॥**[43] इति।

"प्रजापतिर्वै त्रीन् महिम्नोऽसृजत अग्निं वायुं सूर्यम्" इति। "प्रजापतिः लोकानभ्यतपत्। तेभ्योऽभितप्तेभ्यः रसान् प्रबहत् अग्निं पृथिव्या वायुम् अन्तरिक्षात् सूर्यं दिवः" इति च वाक्यद्वये देवताविभागः वेदादेव उद्धृत इति ज्ञायते। एवं विभक्तानां त्रीणां स्थानत्रयमपि वेद एव बोधयति-

**पृथिव्यसि जन्मन वशासा अग्निगर्भम् अधत्था ॥**
**अन्तरिक्षमसि जन्मन वशासा वायुं गर्भमधत्ताः।**
**द्यौरसि जन्मना वशासा आदित्यं गर्भमधत्ताः ॥** इति।

---

[41] निरुक्तम् ७।५।१

[42] निरुक्तम् ७।५।२

[43] यजुर्वेदवाजसनेयिसंहिता १७।३२

मध्यमस्थाने यास्कः वायुरिन्द्र इति द्विप्रकारकानां देवतानाम् उल्लेखः कृतवान्। तत्किमर्थमिति चेत्- मध्यमस्थाने उभयकर्मात् के देवते भवतः- विद्युच्च वायुरिति। विद्युदाख्यः अनित्यदर्शनः। वायुस्तु त्वगिन्द्रियप्रत्यक्षत्वेन नित्यदर्शनो भवति। अन्ये स्थानद्वये एतादृशानाम् उभयकर्मणां सत्ता नास्त्येव इति दुर्गाचार्यः भाष्ये पाठितवान्।

एतस्य देवतात्रियस्य महाभाग्यो वर्तते। अत एव एकैकस्याः देवतायाः अनेकानि नामानि भवन्ति। अग्नेः जातवेदाः वैश्वानर इति। वायोः वरुणः रुद्र इति। सूर्यस्य अश्विन् उषा इत्यपि च अनेकानि नामानि भवन्ति। तेषां त्रितयानां देवतानां एकैकस्याः कर्मसाहचर्यादीनां वर्णनमत्र निरुक्ते विस्तृतं दृश्यते।

1. अग्निं भजमानाः- "अयं लोकः, प्रातः सवनम्, वसन्तः, गायत्री, त्रिवृत् स्तोमः, रथान्तरं सामये च देवगणाः समाम्नाताः प्रथमे स्थाने [अग्नीः, अक्षाः, ग्रावाणः, अभीषवः इत्येवमादयः] अग्नायी, पृथिवी, इळा इति स्त्रियः"[44] इति निरुक्ते पाठितः। अग्नेः कर्म तु हविर्वहनं देवतावाहनादयः इति यास्कः तस्य कर्म बोधयति। अग्निना सह अत्र इन्द्रसोमवरुणपर्जन्यर्त्वादयः स्तूताः[45]।

---

[44] निरुक्तम् ७।८।२

[45] ऋग्वेदे ३।२६।४ ; ४।१।१ ; १।९३।१ ; ६।५२।१६ ; १।१५।४ क्रमेण इत्याद्यत्र उक्तानां देवतानां स्तुतयो दृश्यन्ते ।

2. इन्द्रं भजमानाः- "अन्तरिक्षलोकः माध्यन्दिनं सवनम्, ग्रीष्मः, त्रिष्टुप्, पञ्चदशस्तोमः बृहत्साम ये च देवगणाः समाम्नाताः मध्यमे स्थाने"[46] इति। एवमेव आदित्यादय स्त्रियः।

अस्य त्विन्द्रस्य कर्म रसानुप्रदानम्, वृत्रवध इत्येवमादयः। तत्र इन्द्रेण सह अग्निः, सोमः, वरुणः, पूषा, बृहस्पतिः, ब्रह्मणस्पतिः, पर्वतः, कुत्सः, विष्णुः, वायुः इत्यादयः स्तूताः[47]

3. आदित्यं भजमानाः- "असौ लोकः तृतीयसवनम्, वर्षा, जगती, सप्तदशस्तोमः, वैरूपं साम ये च देवगणाः समाम्नाता उत्तमे स्थाने"[48] इति। एवमेव उषा, सूर्या, वृषाकपेयी, सरण्यूः, देवपत्न्यः इत्यादयः स्त्रियः। अस्य कर्म तु रसादानम्, रश्मिभिः रसधारणम् इत्यादयः। एतेन सह चन्द्रः, वायुः, संवत्सरा अपि स्तूताः[49]

---

[46] निरुक्तम् ७।१०।१

[47] ऋग्वेदे ३।१२।९ ; ३।१०४।२ ; ६।६८।१ ; ६।५७।१ ; ४।४९।१ ; २।२४।१२ ; ३।५३।१ ; ५।३२।९ ; ७।९९।५ ; १।२।४ इत्याद्यत्र क्रमेण उक्तानां देवतानां स्तुतयः दृश्यन्ते ।

[48] निरुक्तम् ७।११।१

[49] ऋग्वेदे १०।८५।१८ ; यजुर्वेदवाजसनेयिसंहिता ३४।५५ ; ऋग्वेदे १।१६४।१२ च इत्याद्यत्र क्रमेण उक्तानां देवतानां स्तुतयः दृश्यन्ते ।

एवं प्रकारेण देवताः तेषां स्थानमनुसृत्य त्रिविधा इति यास्को विभक्तवान्। याज्ञिकास्तु जातवेदाः, वैश्वानरः, अग्निः पृथग्देवता इति पृथगभिधानेन पृथक् स्तुतीः तेषां विधीयन्ते। स्तुतिव्यत्यासेन प्रत्यवायो जायत इति तेषां मतम्। परन्तु इदं मतं यास्कस्य कृते अनर्थम्। किन्तु एकस्या एव देवतायाः पृथक् कर्मानुसारेण अनेकनामाभिधाने तत्र व्यक्तिर्देवता एक एव। यथा एक एव पुरोहितः कर्मपृथक्त्वात् होता, अध्वर्युः, ब्रह्म, उद्गाता इति नानानामभिः अभिधानेन सः एक एव पुरोहितः तथैव देवतानाम् अन्वयः कर्तव्यम् इति यास्कस्य मतम्[50]। कर्मपृथक्त्वात् देवतापृथक्त्वं याज्ञिकाः, कर्मपृथक्त्वेऽपि स्थानैकत्वात् न देवतापृथक्त्वमिति नैरुक्ताः वदन्ति। परन्तु तत्र शास्त्रे भेदाभेदत्वं वर्तत एवेति यास्कः निर्णीयते। "तत्रैतन्नरराष्ट्रमिव"[51] इत्युक्त्वा राष्ट्रत्वेन अभेदः नरत्वेन भेदः यथा वर्तते तथैव देवतानामपि वर्तते इति यास्कस्य मतम्। एवमेव "पृथिव्यग्नि" इत्यत्र ऐक्यम् ; जातवेदाः, वैश्वानरः इत्यत्र भेदः उपपन्नः। एवं प्रकारेण देवताः सामान्यविशेषधर्मैः समन्विताः।

अत्र त्रितया वादिनो दृश्यते- याज्ञिकाः, नैरुक्ताः, आत्मवित इति। एते एकैकाः एकैकमर्थं बोधयन्ति। याज्ञिकाः वेदस्य केवलाधियज्ञार्थं स्वीकुर्वन्ति। नैरुक्ताः तस्यैव वेदस्य अधिदैवविषयनियतम् अर्थं

---

50 "अपि वा कर्मपृथक्त्वाद्यथा होताध्वर्युब्रह्मोद्गातेत्यप्येकस्य सतः" (निरुक्तम् ७।५।४) इति ।

51 निरुक्तम् ७।५।९

स्वीकुर्वन्ति। आत्मवितस्तु वेदस्य अध्यात्मं विषयमेव गृह्यन्ते। अत एव मतत्रयाध्ययनेन वेदस्य त्रिविधार्थबोधो जायते इति अस्माकमुद्देशः। अर्थात् याज्ञिकाः त्रित्वम्- एकत्वे नानात्वम् अङ्गीकुर्वन्ति। नैरुक्ताः नानात्वम्- एकत्वे त्रित्वम् अङ्गीकुर्वन्ति। आत्मवित्सु त्रित्वनानात्वानि उणानीत्युक्त्वा अङ्गप्रत्यङ्गभावं कल्पयित्वा ब्रह्मैकत्वमङ्गीकृतवन्तः। एवम् इदं मतत्रयम् एकस्यैकं पोषकं न तु विरोधमिति मन्तव्यम्।

एवं देवताविभागविश्लेषणानन्तरं निरुक्तस्य मुख्यविषयं निर्वचनक्रमं यास्कोक्तदिशा निरूपयितुं यतते। अत्र यास्कः साक्षादेव निर्वचनक्रमं साधयित्वा सिद्धान्तितवान्। तद्रूपं निर्वचनक्रममत्र चिन्तयामः।

## निर्वचनक्रमसङ्क्षेपः

निर्वचनशास्त्रे शब्दस्य प्रामुख्यं स्वरूपञ्च ज्ञात्वा मन्त्रार्थानाम् अर्थवत्त्वस्य वादं सिद्धान्तीकृत्य इदानीं तावत् यास्कीये निरुक्ते यः निर्वचनक्रमः बोधितः स एवात्र प्रस्तूयते। आचार्यो यास्कः निर्वचनादपि प्राक् तस्य निर्वचनस्य क्रममुद्दिश्य बोधयति। निर्वचनस्य लक्षणं तावत् व्याख्यानादपि पूर्वमेव बोधितव्यम्। सा च पद्धतिः यास्केन निरुक्ते विस्तारेण वर्णिता। उक्ता तु पद्धतिः अधस्तनेषु वाक्येषु द्रष्टुं शक्यते। यथा-

1. शब्दाः विविधाः वर्तन्ते। तेषां केषुचन शब्देषु स्वरसंस्कारसामर्थ्यं वर्तते। इतः केषुचन शब्देषु तत्सामर्थ्यं नास्त्येव। केषाञ्चित् शब्दानां

उदात्तादिस्वरेभ्यः अर्थव्यत्यासो जायते। तेऽपि वाक्यशः एकमर्थं बोधयन्ति। वर्णशः अपरमर्थं साधयन्ति। एतावतान् प्रादेशिकगुणान् ऊह्य शब्दानां निर्वचनं कर्तव्यम्। तत्र अर्थ एव प्रधान इति मत्वा तल्लक्षणम् अनादरमिति न मन्तव्यम्। यास्कः तस्य निरुक्ते इदमेव उक्तवान्। यथा- "तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ स्यातां तथा तानि निर्ब्रूयात्"[52] इति।

2. केषाञ्चन शब्दानां स्वरसंस्कारः प्रकृतौ स्थिते निपुणान्वेषणेनापि अर्थकल्पनम् तत्र असाध्यम्। किन्तु तत्र शब्दार्थयोः स्वरूपे भिन्नत्वं दृश्यते। शब्दे प्रादेशिकविकारसिद्धावपि तेन बोधितां क्रियां बोधयितुं स शब्दः असमर्थ एव स्यात्। अस्य कोऽपि परिष्कारः वर्तते वा? इति चेत्- "अर्थनित्यः परीक्षेत" इति यास्काचार्यः एव तं दोषं परिहरति। तत्र अर्थ एव प्रधान इति बोधयति। अत एव एतेषां शब्दानां स्वरसंस्करादीन् अनादृत्य परीक्षितव्यम्। सामान्यार्थवृत्त्या वा क्रियागुणेन कस्य धातोः अत्र अर्थः कल्पनीयः इति तन्निर्वचनलक्षणं तर्क्यं निर्ब्रूयात्। अयमेव विषयः यास्कस्य निरुक्ते एवं दृश्यते- "अथ अनन्विते अर्थे अप्रादेशिके विकारे अर्थनित्यः

---

[52] निरुक्तम् २।१।२

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

परीक्षेत केनचित् वृत्तिसमान्येन"[53] इति। अस्मादध्ययनात् ज्ञायते यत्-"शब्दसामान्यादपि अर्थसामान्यः बलीयः" इति।

3. उदात्तादिस्वरसंस्काररहितानां सामान्यार्थदुर्बोधानां तु पदानां कथं वा निर्वक्यव्यम्? इति चेत्- अस्मिन् शब्दे अस्य धातोः स्वरो वा वर्णः दृश्यते इत्यूह्य तस्य धातोः अर्थसूत्रबद्धतया स अर्थः प्रकाशितव्यः। एवम् उपर्युक्तेषु शब्देषु निरुक्तिः कुर्यात्। अयं विषयः निरुक्ते- "अविद्यमाने सामान्येऽपि अक्षरसामान्यात् निर्ब्रूयात्। न संस्कारमाद्रियेत विषयवत्यो हि वृत्तयो भवन्ति। यथार्थं विभक्तिः सन्नमयेत्"[54] इत्यादिषु वाक्येषु दृश्यते। केचन शब्दाः तेषां मूललक्षणात् दूरीभवन्ति। तद्रूपानां शब्दानां निर्वचनाय शब्दसामान्य आश्रयणीयो वा अर्थसामान्यः? इति चेत्-

प्रवीणः उदारः निस्त्रिंशः इत्यादयः शब्दाः तेषां मूलार्थसम्बन्धात् दूरीभूत्वा सामान्यक्रियामाधारीकृत्य अन्यमन्यमर्थं बोधयन्ति। यथा- प्रवीणः इत्यस्य "प्रकृष्टो वीणायां प्रवीणः गान्धर्वे" इत्यर्थः सिद्ध्यति। परन्तु प्रवीणशब्दस्य इदानीं तदर्थः व्यत्यासो भूत्वा अभ्यासपाटवेषु अन्वेति। लोके अयं च

---

53 निरुक्तम् २।१।३

54 निरुक्तम् २।१।४
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

शब्दः कृतयत्नम् उत्पन्नकौशलं च बोधयति। यथा- अयं व्याकरणे प्रवीणः, अयं वेदान्ते प्रवीणः इत्यादयः। उदारशब्दस्यापि एवमेव अर्थव्यत्यासो जातः। प्रकृते सारथेः वाक्सङ्केतमात्रेणैव यः अश्वो वा वृषभः तस्य कार्यं वहति तमुदारः इति वक्तव्यम्। लोके तु इदानीम् अयं शब्दः प्रार्थितस्यान्तर्मुखं विलक्ष्य प्रार्थनात्पूर्वमेव यः दानं करोति सः उदारः इत्यर्थे उपयुज्यन्ते। एवञ्च निस्त्रिंशशब्दस्यापि अर्थव्यत्ययः जातः। यथा- त्रिषु दिक्षु निशितस्य खड्गस्य निस्त्रिंशः इति प्रकृतार्थः। परन्तु लोके तस्य खड्गस्य छेदनं क्रौर्यरूपमिति अर्थसामान्यत्वं मत्वा क्रूरस्य जनस्य निस्त्रिंश इति अर्थः कल्पितः। एवं प्रकारेण धातुषु तस्य शब्दस्य वर्णपदानि परीक्ष्य ऊह्य च शब्दं निर्ब्रूयात् इति यास्कः बोधयति। केषाञ्चन शब्दानाम् अर्थेषु वृत्तयोऽपि संशययुताः भवितुमर्हन्ति। तत्स्थानेषु पूर्वोत्तरपदप्रकरणानाम् अविरोधेन शब्दं निर्वक्तव्यम्। तत्र अर्थस्यादोषान्वयार्थं विभक्तिविपरिणामोऽपि कर्तव्यः। एवं प्रकारेण यास्कः निरुक्तकारेभ्यः निर्वचनविधौ सामान्यनियमान् बोधयति। ते चात्र एवं सङ्गृहीताः-

- धातूनां यः आदिविपरिणामो जायते स निरुक्तकारेभ्यः अवगन्तव्यः। प्रत्तम् अवत्तम् इत्यादयः शब्दाः अस्य नियमस्य दृष्टान्ताः।

- स्तः, सन्ति इत्यादयः आस्तेः इत्यस्य अकारलोपः तदेवादिलोपः इति ज्ञायते।
- गत्वा, गतम् इत्यत्र अन्तलोपः दृश्यते।
- जग्मतुः, जग्मुः इत्यत्र उपधालोपः।
- राजन्, दण्डिन् इत्याद्यत्र राजा, दण्डी इति उपधाविकारः जायते इति ज्ञायते।
- "तत्वायामि" इत्यत्र "याचामि" इत्यस्य वर्णलोपेनैव यामीति जायते।
- तृचः इत्यत्र यथा ऋकाररेफयोः लोपः जायते तथैव द्विवर्णलोपोऽपीति ज्ञायते।
- द्युत-दीप्तौ इत्यनेन ज्योतिरिति ; हन-हिंसागत्योः इत्यनेन घन इति ; भिदिर्-विदारणे इत्यनेन बिन्दुरिति ; भट-भृतौ इत्यनेन बाट्य इति जाताः। एवमादिषु सर्वत्र आदिविपर्ययो जातः।
- श्चुतिर्-क्षरणे इत्यनेन स्तोका इति ; सृज-विसर्गे इत्यनेन रज्ज इति। कस-विकसने इत्यनेन सिकाका इति सिद्ध्यन्ति। अत्रैतेषु आद्यन्तविपर्ययो जात इति ज्ञायते।
- वह-प्रापणे इत्यनेन ओघः इति ; मिह-सेचने इत्यनेन मेघा इति ; णह-बन्धने इत्यनेन नाधः इति रूपाणि

सिद्धानि। अत्रैवमादिषु अन्तव्यापत्तिः जात इति यास्कीयमतम्।

- असु-क्षेपणे इत्यनेन अस्थत् इति ; भ्रस्ज-पाके इत्यनेन भरूजा इत्येतादीनि रूपाणि सिद्धानि। अत्रैतत्सु वर्णोपजनः जात इति दृश्यते।
- व्याकरणं लक्षणप्रधानं शास्त्रम्। एवमपि तत्र शास्त्रे अर्थवशादेव लोपागमादीनि जायन्ते। परं निरुक्ते अर्थप्राधान्ये शास्त्रे किं तत्र प्रमुखं स्थानं लभते? इति चेत्- पूर्वोक्ताः आदिमध्यान्तविकारः, वर्णलोपः, द्विवर्णलोपः, आदिविपर्ययः. आद्यन्तविपर्ययः, वर्णोपजन इत्यादयः वेदे भाषायामपि दृश्यन्ते। तेषां साहाय्येन यथासम्भवं निर्वक्तव्यम् इति यास्कस्य सुमतम्।

4. केषाञ्चिद्धातूनां विकल्पेन सम्प्रसारणं सिद्ध्यति। केचन धातवस्तु उभयथा सिद्ध्यन्ति। शब्दनिर्वचनसमये सम्प्रसार्यम् असम्प्रसार्यं ज्ञात्वा शब्दं निर्वक्तव्यम्।

5. लोकव्यवहारस्थान् प्रसिद्धप्रयोगाननुसृत्य वैदिकानां शब्दानां कृत्प्रत्ययानां च निर्वचनं वक्तव्यम्। इमं विषयं यास्कः तस्य निरुक्ते- "अथापि भाषिकेभ्यः धातुभ्यः नैगमाः कृतो भाष्यन्ते दमूनाः

क्षेत्रसाधाः इति"[55] इत्युक्तवान्। अस्मात् वाक्यात् यास्कस्य कालेऽपि संस्कृतभाषा व्यवहारे आसीदिति स्पष्टं ज्ञायते। अस्य दमूनाः क्षेत्रसाधाः इत्यादयः शब्दा एव दृष्टान्ताः। व्यवहारे दमशब्दः उपशमनार्थे उपयुक्तो भवति। एवं "दाम्यति अनड्वान्" इति प्रयोगो व्यवहारे दृश्यते। वेदे "दमूना अग्निः" इति प्रयोगो भवति। शब्दसामान्ये निर्वचनसमये दमूना इत्यस्य दममानाः इति प्रयोगः दृश्यते। दममानाः इत्यस्य मनोनिग्रहवान् इत्यर्थः फलति। एवमेव "मित्रं न क्षेत्रसाधसम्" इत्यस्यापि मित्रमिव क्षेत्रं साधयतीति निर्वक्तव्यमिति यास्काचार्याणामुपदेशः।

6. वैदिकान् प्रयोगान् ज्ञात्वा व्यावहारिकभाषायां निर्वक्तव्यम्। यथा भाषाविषयमनुसृत्य छन्दोविषयानां निर्वचनं क्रियते तथैव रूढावेव भाषायां निर्वक्तव्यम्। एवं हि निरुक्ते- "अथापि नैगमेभ्यः भाषिकाः उष्णं घृतम् इति"[56] इत्युच्यन्ते। वेदे प्रसिद्धानां प्रयोगानां नियमं ग्राह्य कृत्प्रत्ययादीनां निर्वचनं कर्तव्यम्। यथा- उष-दाहे इत्यनेन धातुना उष्णम् इति व्यवहारो वर्तते। अस्य प्रयोगस्तु वेदे प्रसिद्धः। स च- "प्रत्युष्टं रक्ष प्रत्युष्टा अरातयः" इति। एवमेव घृ-क्षरणदीप्त्योः इत्यनेन धातुना "आ त्वा जिघर्मि" इति वेदे एव प्रसिद्धः प्रयोगः

---

[55] निरुक्तम् २।२।६

[56] निरुक्तम् २।२।७

वर्तते। अयमेव प्रयोगः व्यवहारे भाषायां घृतमिति जातः। एवं प्रकारेण भाषाविषयं ग्राह्य वेदविषयं तथा च वेदविषयमनुसृत्य भाषाविषयं निर्वक्तव्यम्।

एवमेव तत्तद्देशरूधिमनुसृत्य शब्दं निर्ब्रूयात्। यथा- "अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"[57] इति निरुक्ते भाषितम्। केषुचिद्देशेषु धातूनां विकृतिरूपाणां शब्दानां प्रयोगः दृश्यते। यथा- "शवतिर्गतिकर्माकाम्भोजेष्वेव भाष्यते" इति "विक्रमस्यार्येषु भाष्यते शव इति" इति च वाक्यद्वयं दृश्यते। अत्र अस्मिन् वाक्ये प्रयुक्तः शब्दः काम्भोज इति देशः अद्यतने "काम्बोडिया" इति अवर्तत इति लोके विचारः प्रचलति। सङ्गीतशास्त्रे तु काम्भोज इति रागः तस्मादेव काम्भोजदेशात् उत्पन्न इत्यपि वादः लोकप्रसिद्धः। काम्भोजदेशे शवति इत्यनेन गमनक्रियायाम् अर्थः सञ्जायते। आर्यजनपदेषु अस्य विकृतिः दृश्यते। यथा- तत्र शवशब्दः मृतकस्य कलेवर इति अर्थे व्यवह्रियते। प्राच्यजनपदाः दाति इतीमं "व्रीहीन् दाति" इति धान्यकर्षणार्थे प्रयुज्यन्ते। एवं हि उत्तरजनपदाः दाति इतीमं नामपदरूपे "दीयते अनेन इति दात्रम्" इति प्रयुज्यन्ते। तदपि निरुक्ते एव प्रस्तुतम्- "दातिः लवनार्थे दात्रमुदीच्येषु"[58] इति। एवं प्रकारेण एकपदानि

---

[57] निरुक्तम् २।२।८

[58] निरुक्तम् २।२।८

देशभाषाप्रसिद्धिं भाषानिगमव्यवस्थां च अनुसृत्य निर्वक्तव्यमिति यास्काचार्यः उपदिशति।

तद्धितानां समस्तानां च पदानां कथं निर्वक्तव्यम्? इति प्रश्ने- परं तत्र तद्धितपदेषु पदस्य अर्थः बोद्धव्यो वा तद्धितार्थो बोद्धव्यः वा? इति ; सामासे प्रथमं तत्र पदस्यार्थो वा समासार्थो वा बोद्धव्यः? इति प्रश्नद्वयम् उद्भूयते। एतयोः प्रश्नयोः यास्काचार्यः समाधानं दीयते। तथा हि- तद्धितानां प्रथमं तावत् तद्धितार्थमुक्त्वा तदनन्तरं पदस्यार्थं निर्वक्तव्यम्। एवमेव समस्तपदानां प्रथमं समासार्थमुक्त्वा अनन्तरं शब्दर्थं निर्ब्रूयात् इति यास्को बोधयति। निरुक्ते- "अथ तद्धिसमासेषु एकपर्वसु च अनेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्"[59] इति यास्केन उपदिष्टम्। तद्धितैकपर्वपदस्य तत्रैव वृत्तौ दण्ड्यः इति उदाहरणं दृश्यते। एवमेव तद्धितानेकपर्वपदं "वार्ष्यायणिः" इत्यनेनोदाह्रियते। समासैकपर्वपदं "पुरुषौ; पुरुष्याः" इत्यनेनोदाह्रियते। अनेकपर्वपदं "द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च। पञ्चमस्तु बहुव्रीहिः षष्ठः तत्पुरुषः स्मृतः॥ इत्यनेन उदाहर्तुं शक्यते।

एवं प्रकारेण यास्कनिरुक्ते शब्दस्य निर्वचनक्रममुक्त्वा निरुक्तस्य त्रिषु काण्डेषु निरुक्तानां केषाञ्चन पदानां निर्वचनमग्रे दर्शयितुं यतते।

---

[59] निरुक्तम् २।२।१०

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## दृष्टान्ताः

अस्मिन् ग्रन्थे उपदिष्टानां निर्वचनानां निर्वचनक्रमज्ञानाय एकैकमत्र दृष्टान्तमिति स्वीकृत्य निरूप्यते।

## नैघण्टुककाण्डम्

**अथोषोनामानि**

निघण्टुः-

विभावरी। सूनरी। भास्वती। ओदती। चित्रामघौ।

अर्जुनी। वाजिनी। वाजिनीवती। सुम्नावरी। अहना।

द्योतना। श्वेत्या। अरुषी। सूनृता। सूनृतावती।

सूनृतावरी इति षोडशोषोनामानि ॥

निरुक्तम्-

उषोनामान्युत्तराणी षोडश।

उषाः कस्मात्? उच्छतीति सत्याः रात्रेः अपरः कालः। तस्या एषा भवति-

**इदं श्रेष्ठं ज्योतिषां ज्योतिरागात्**

**चित्रः प्रकेतो अजनिष्ट विभ्वा।**

**यथा प्रसूता सवितुः सवायम्**

**एवा रात्र्युषसे योनिमारैक्** ॥[60] इति।

---

[60] ऋक्संहिता १।११३।१
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत्। चित्रं प्रकेतनं प्रज्ञाततमम् अजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्य। एवं रात्र्युषसे योनिमरिचत् स्थानम्। स्त्रीयोनिरभियुत एनां गर्भः।

तस्या एषापरा भवति-

**रुशद्वत्सा रुशन्ती श्वेत्यागात्**

**आरैगु कृष्णा सदनान्यस्याः।**

**समानबन्धू अमृते अनूची**

**द्यावा वर्णं चरत आमीनने ॥**[61] इति।

"रुशद्वत्सा" सूर्यवत्सा। रुशदिति वर्णनाम रोचतेर्जलतिकर्मणः। सूर्यमस्यावत्समाह साहचर्यात् रसहरणाद्वा। "रुशती श्वेत्यगात्"। श्वेत्याश्वेततेः। अरिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः। कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति "समानबन्धू" समानबन्धने। "अमृते" अमरणधर्माणौ अनूची अनूच्यावितीतरमभिप्रेत्य "द्यावावर्णं चरतः" ते एव द्यावौ द्योतनात्। अपि वा द्यावा चरतस्तया सह चरत इति स्यात्। आमिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे ॥[62] इति निरुक्तमूलम्।

विभावरीत्यादयः मूलोक्तानि नामानि उषासः षोडशनामानि निघण्टूक्तानि भवन्ति। उषाः इति किमर्थमिति प्रश्ने यास्कः- स्वयं तमसं

---

[61] ऋक्संहिता १।११३।२

[62] निरुक्तम् २।१८।१९

नाशयति ; रात्रेरपरकालश्चेति उक्त्वा तदर्थपुष्ट्यर्थं ऋग्वेदमन्त्रम्[63] उदाहृत्य निरुक्तवान्।

उषासः लक्षणीभूता या ज्योतिः आदित्यादिभिरपि श्रेष्ठतमा। आदित्यः चन्द्रमा च स्वयं प्रकाशकावपि तत्रैकः तापकः अपरः शीतकारकः। परन्तु उषाः अनुष्णाशीतापि प्रकाशिका। अत एव इतरेभ्योऽपि ज्योतिभ्यः सा उषाः श्रेष्ठतमा इति वर्णिता। पूजनीया च एषा जन्मना सर्वदिक्प्रकशिका भवति। एवमेषा ज्योतिरूपेण विस्तीर्णतमा भवति। आदियोत्सृष्टे देशे एषा सवितुरपि जननम् अपरकालप्रज्ञाभूता इति अस्मात् वेदमन्त्रात् ज्ञायते। अस्य मन्त्रस्यार्थस्य दार्ढ्याय यास्कः अपरमेकं ऋङ्मन्त्रं[64] प्रवर्तयति।

रुशद्वत्सा = सूर्यवत्सा। रुचत् इति रोचिष्णोः ज्वलनकर्मणः प्रकाशमानायां कान्तौ अन्वेति। साहचर्याद्वा रसहरणकारणाद्वा सूर्यः अस्याः वत्स इति ऋषिरवदत्। अत्र उषासूर्ययोः मातापुत्रसम्बन्धः फलति।

स्वतः रोचनशीला श्वेतवर्णा चैषा उषाः रात्रावपरे काले उदेति। मन्त्रे श्वेत्या इति पदं श्वेतति इति धातोः रूपम्। कृष्णवर्णा च रात्रिः अस्याः कृते स्थानं ददाति। निकृष्टवर्णरूपा कृष्णवर्णा इति तस्यार्थः फलति। मन्त्रस्य शेषभागस्तु उषारात्री एककाले स्तूयते। एते द्वे समानबन्धू =

---

[63] ऋक्संहिता १।११३।१

[64] ऋक्संहिता १।११३।२

समानबन्धिन्यौ भवतः। एते द्वे मरणरहिते अमृतरूपे च। एते इतरेतरसंश्लेषभूते। एते द्योतमानेन द्युलोकेन स्पर्धया सञ्चरतः। एवमितरेतरसंश्लिष्टे भूत्वा स्वयं प्रकाशयतः इति नैघण्टुककाण्डस्य एकं निर्वचनमत्र दृष्टान्तमिति निरूपितम्। अस्य काण्डस्य एकस्य निर्वचनस्य अनन्तरं नैगमकाण्डोक्तानाम् अनेकेषु एकस्य शब्दस्य निरुक्तिरुच्यते।

## नैगमकाण्डम्

**वराहः**

वराहो मेघो भवति। वराहारः "वरमाहारमाहार्षीः" इति च ब्राह्मणम्।

"विध्यद्वराहं तिरो अद्रिमस्ता" इत्यपि निगमो भवति। अयमपीतरो वराहः एतस्मादेव। बृहति मूलानि वरं ; वरं मूलं बृहतीति वा। "वराहमिन्द्र एमुषम्" इत्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते। "ब्रह्मणस्पतिः वृषाभिर्वराहैः"। अथाप्येते माध्यमका देवगणा वराहवः उच्यन्ते। "पश्यन् हिरण्यचक्रादयो दंष्ट्रान् विधावतो वराहून्" इति।

वराहो नाम मेघः। अस्याहारः वरनामधेयः उदकमिति कारणात् ब्राह्मणग्रन्थाः तं मेघं "वरमाहारमाहार्षीः" इति कथयन्ति। वेदोऽपि "विध्यद्वराहं तिरो अद्रिमस्ता"[65] इति मेघं वर्णयति। दूरे स्थित्वा वज्रं क्षिपतीति अर्थः अस्य मन्त्रस्य फलति।

---

[65] ऋक्संहिता १।६१।७

अपरोऽपि प्राणिवाचको वराहशब्दः दृश्यते। मृणालमाहार इव स्वीकरोतीति अर्थे अयं शब्दः बोध्यः।

"वराहमिन्द्र एमुषम्"[66] इति असुराणां मोहस्थानीयं वराहरूपिणम् असुरम् इन्द्रो मारितवान् इत्यत्र अयं शब्दः प्राणिवाचक एव।

अङ्गिरसोऽपि वराह इति नाम वर्तते। "ब्रह्मणस्पतिर्वृषाभिर्वराहैः"[67] इत्यत्र अङ्गिरसं वराहशब्दो बोधयति।

मध्यमस्थानीयान् देवानपि वराहशब्दो बोधयति। "पश्यन् हिरण्यचक्रानयो दंष्ट्रान् विधावतो वराहून्"[68] इति मन्त्रः तस्य दृष्टान्तः[69]। एवं प्रकारेण नैगमकाण्डे अनेकेषु एकस्य वराहशब्दस्य निर्वचनमुक्त्वा अनन्तरं दैवतकाण्डस्थम् एकं शब्दं निरुच्यामः।

## दैवतकाण्डम्

अस्मिन् काण्डे उक्तानां निरुक्तीनाम् एका अत्र दृष्टान्तरूपेण निरूप्यते।

इन्द्रः

इन्द्रः इरां दृणातीति वा। इरां ददातीति वा।

इरां दधाति वा। इरां धारयत इति वा।

---

66 ऋक्संहिता ७।७७।१०

67 ऋक्संहिता १०।७६।७

68 ऋक्संहिता १।८८।५

69 निरुक्तम् ५।४।१-३

इरां धारयतीति वा। इन्दवे द्रवतीति वा।

इन्दौ रमत इति वा। इन्धे भूतानीति वा।

तद्यदेनं प्राणैः समैन्धन् तदिन्द्रस्येन्द्रत्वमिति विज्ञायते। इदं करणादित्याग्रायणः। इदं दर्शनादित्यौपमन्यवः। इन्द्रतेर्वैश्वर्यकर्मणः।

इन्द्रन् शत्रूणां धारयता वा द्रावयिता वा आदरयिता च यज्वनाम्।

तस्यैषा भवति-

**अदर्द रुत्समसृजो विखानि**

**त्वमर्णवान् बद्धधानां अरम्णाः।**

**महान्तमिन्द्रपर्वतं वि यद्वः**

**सृजो विधारा अव दानवं हन् ॥**[70]

अदृणा उत्सम्। उत्स उत्सरणाद्वोत्सदनाद्वा उत्स्यन्दनाद्वा उनत्तेर्वा व्यसृजोऽस्य खानि त्वमर्णवानर्ण स्वत एतान्माध्यमिकान् संस्त्यायान् बाबध्यमानानरम्णा। रम्णातिः संयमनकर्मा विसर्जनकर्मा वा महान्तमिन्द्रपर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणम्।

तस्यैषा अपरा भवति-

**यो जात एव प्रथमं मनस्वान्**

**देवो देवान् क्रतुना पर्यभूषत्।**

---

[70] ऋक्संहिता ५।३२।११

**यस्य शुष्माद्रोदसी अभ्यसेताम्**

**नृम्णस्य मह्ना स जनास इन्द्रः ॥**[71]

यो जयमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा यस्य बालाद्यावापृथिव्यावप्यभिभीतां नृम्णस्य मह्ना बलस्य महत्वेन स जना स इन्द्र इति। ऋषेः दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता इति। इति निरुक्तमूलम्[72]।

इन्द्र इति किम्? व्रीहिं भेदयति अयमिति इन्द्रः। वृष्ट्या सिक्तान् बीजान् अङ्कुराणीव भेदयतीत्यर्थः। अथवा अन्नं (व्रीह्यादीन्) ददातीति। अथवा अन्नं पोषयतीति। अथवा अन्नं धारणाय ददातीति। अथवा सोमाय चलति इति वा इन्द्रः। इन्दुर्नाम सोमः। तस्मै सोमपानाय गच्छति। अत एव एषः "इन्दुद्रवः = इन्द्रः" इति। सोमेनायं क्रीडतीत्यपि वक्तुं शक्यते। अन्नोत्पत्तेरधिदेवः अयं आत्मस्थो भूत्वा प्राणिनां चेतनत्वं ददाति।

"शरीरस्य मध्ये प्राणाभावेन अवस्थितो भूत्वा वागादीनां महाभाग्यं दत्त्वा तान् द्योतयतीति इन्द्रः। अयमेव इन्द्रस्य इन्द्रत्वम्" इति ब्राह्मणग्रन्थैः ज्ञायते। इदं समस्तं यः सृष्टवान् स एव इन्द्र इति आग्रायणस्य मतम्।

---

[71] ऋक्संहिता २।१२।१

[72] निरुक्तम् १०।८-१०

**[इदङ्करः सन् इन्द्रः]**

इदं सर्वं एष दृष्टवानिति इन्द्रः इति औपमन्यवानां मतम्। समस्तं स्वयं युगपत् साक्षात्कृतवान् इति अभिप्रायः। इदं दर्शी = इन्द्रः इति। परमेश्वरेणैतेन भाग्यं वर्धते। अत एव एष इन्द्रः अथवा शक्तोऽयं सर्वान् शत्रून् मर्दयतीति एष इन्द्रः। अथवा याजकेषु अपारोदारदर्शनात् अयमिन्द्रः। इतीमम् अंशमयं मन्त्रः बोधयति।

"अदर्द"[73] इत्यस्मिन् मन्त्रे उत्सः इत्यस्य मेघ अर्थः। किन्तु अयम् उपरि सरति इति। उर्ध्वमसौ सन्नः = उत्सः मेघः इति। अथवा ऊर्ध्वं तिष्ठतीति च। अथवा उर्ध्वे अवस्थितो भूत्वा वर्षयतीति उत्सः। अथवा वृष्ट्या सर्वं सेचयतीत उत्सः। अत्र निरुक्तौ रम्णाति इति धातुः संयमनं विसर्जनं च कर्मद्वयं बोधयति। इन्द्रस्य कर्म रसानुप्रधानम्, वृत्रवधः इति वेदः बोधयति। उपर्युक्तः मन्त्रः इन्द्रस्य रसानुप्रदानस्य वृत्रवधस्य उदाहरणं भवति। इतोऽप्येकं कर्म इन्द्रस्य वेद एव अस्मात् अधोदत्तमन्त्रात् बोधयति। स एव गुणः बलप्रदर्शनम्। यथा-

**यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।**

**यस्य शुष्माद्रोदसी अभ्यसेताम् नृम्णस्य मह्ना स जनास इन्द्रः ॥**[74]

इति।

---

[73] ऋक्संहिता ५।३२।११

[74] ऋक्संहिता २।१२।१

यः जातमात्रेणैव मेधावी भूत्वा सर्वभूतमुख्योऽभवत्। यः तस्य महत्कर्मणा सर्वदेवानां स्वामी चाभूत् अथवा स्वप्रभावेन सर्वान् देवान् अतिकृतवान्। यस्य बलेन द्यावापृथिवी भीतेऽभूताम्। स एव महानात्मा इन्द्र इति ज्ञायताम् इत्यर्थः फलति।

एवं प्रकरेणात्र उक्तस्य इन्द्रशब्दस्य निर्वचनमुक्त्वा तस्य गुणाश्चाप्युक्त्वा काण्डत्रये एकैकं शब्दं निरुक्त्वा तत्काण्डगानां इतरेषां शब्दानां आकरज्ञानाय एकैकं दृष्टान्तमत्र प्रदर्शितम्।

# उपसंहारः

एवमस्मिन् समर्पणीये ग्रन्थे प्रथमाध्यायः यास्कालोचनमिति नामकृतः। अर्थात् वेदवेदाङ्गानि अनुसृत्य तत्र यत्र कुत्रापि यास्कस्य नामोल्लेखनं दृश्यते वा? इति गवेषणमस्य अध्यायस्य प्रमुखोद्देशः। तथापि अस्मिन् अध्याये प्रथमं तावत् निरुक्तस्य वेदाङ्गानामन्यतमत्वात् वेदाङ्गानि उद्दिश्य किञ्चित् प्रासङ्गिकं कृत्वा शिक्षा, कल्पः, छन्दः, ज्योतिषम्, व्याकरणम्, निरुक्तम् इति क्रमे वेदाङ्गानि षट् निरूपितानि। तन्निरूपणानन्तरं निरुक्तस्य प्रयोजनम् अंशत्वेन निरूप्य प्रसङ्गात् तत्र कोऽयं वेदः? इति शीर्षिका कृता। तस्याम् शीर्षिकायाम् वेदस्य लक्षणमुक्त्वा तस्य वेदस्य स्वरूपं प्रतिपादितम्। वेदस्य स्वरूपनिरूपणप्रसङ्गे अमरकोशोक्तरीत्या तस्य नामभेदः सङ्गृहीतः। यथा-

तथा च अत्रोक्तानां नामानां व्युत्पत्तिं स्वरूपं च प्रदर्श्य पूर्वोक्तस्य वेदाङ्गभेदस्य निरुक्तस्य कः प्रणेता? इति विषयः प्रस्तुतः। तत्प्रसङ्गे समूलैः उल्लेखैः यास्कस्यैव निरुक्तमिति पूर्वपक्षसिद्धान्तनिरूपणरीत्या मन्मतं स्थापितम्। ततः निरुक्तं यास्कस्यैवेति चेत् कोऽयं यास्कः? इति प्रश्नसम्भवे तत्समाधाय तस्य कालदेशादयः निरूपितवन्तः। तदनन्तरं तस्य ऋषित्वापत्तिः भवति चेत् कथं वा तस्य ऋषित्वमित्युक्त्वा तस्य तार्त्तीयीकं ऋषित्वं विधितम्। तत्प्रसङ्गे एव निरुक्ते किमर्थं यास्कस्य प्रवृत्तिः जाता इति

चिन्तयित्वा प्रथमाध्याये यास्कमुद्दिश्यालोचनत्वात् अस्याध्यायस्य यास्कालोचनम् इति नामकृतम्।

द्वितीयस्त्वध्यायः निरुक्तालोचनम् इति नाम्ना प्रस्तुतः। अस्मिन् अध्याये निरुक्तस्य वा निघण्टोर्वा उभयोः वेदाङ्गत्वमिति कानिचन पूर्वपक्षाणि प्रदर्श्य तेषां निरासपूर्वकं निरुक्तम् ग्रन्थः तस्य मूलरूपस्य निघण्टोः भाष्यरूपः भवति। निरुक्ते एव उक्तत्वा निघण्टुग्रन्थः आम्नाय एव। अम्नायस्तु वेदाङ्गेभ्यः प्राचीन एव वेदसमो ग्रन्थः। तेनायं निघण्टुः न वेदाङ्गम्। तस्य आम्नायत्वं सिध्यतीति निरूप्य निरुक्तस्य वेदाङ्गत्वं साधितम्। तदनन्तरं निरुक्तस्य अध्यायोक्तानां विषयाणां स्थोलावलोकनं कृतम्। तदवलोकने प्रसङ्गवशात् तत्रत्यदेवताविचारः, शताधिका विज्ञानांशाः, वेदान्तसम्बद्धाः दार्शनिकविषयाः, व्याकरणांशाश्च निरूपिताः।

एवमेव अग्रगे तृतीयेऽध्याये शब्दमुद्दिश्य कृतालोचनात् शब्दालोचनमिति नाम्नि शास्त्रान्तरेषु शब्दस्य स्वरूपं प्रतिपादितम्। तत्रापि शब्दस्य नित्यत्वोक्तौ तेषां निरूपणशैली निरुक्तादपि भिन्ना इति निरूप्य ताः सर्वाः पूर्वपक्षमिति स्वीकृत्य यास्कीयायामेव शैल्यां शब्दस्य व्यक्तिहृदयान्तरे बुद्धौ च नित्यत्वं सिद्धान्तितम्।

अनन्तराध्याये निर्वचनक्रमनिर्णयनाम्नि वेदमन्त्राणामर्थविचारं सङ्गृह्य तन्मन्त्रार्थस्य आवश्यकत्वं प्रबोध्य तेषां मन्त्राणां देवताप्रतिपादकत्वं निरूपितम्। देवताः मन्त्रेषु स्तूयन्ते इत्यनेन यास्कोक्तस्य वृत्रवधस्य विचारे

अव्याप्तिः तन्मतं बाधते इत्यनेनोद्देशेन वृत्रवधविचारमुक्त्वा तदव्याप्तिं वारयित्वा च तासां देवतानां रूपविचारः कथितः। अनन्तरं तासामेव देवतानां स्थानविभागः कृतः। पूर्वोक्ताः पञ्चशीर्षिकाः निर्वचनक्रमनिर्णये प्रासङ्गिका इति अङ्गीकृत्य तत्क्रमः अत्र निर्णीतः। क्रमनिर्णयानन्तरं त्रिकाण्डोक्तानां शब्दानां सुलभनिर्वचनाय तत्तत्काण्डोद्धृतानाम् एकैकानां शब्दानां निर्वचनमत्र निरुक्तमूलमनुसृत्यैव सरलभाषायामत्र प्रदर्शितम्।

तथा हि वेदस्य अर्थनिर्णयाय यथा ब्राह्मणादीनि प्रवर्तन्ते तेभ्योऽप्यधिकं वेदाङ्गानि बोधयन्ति। तत्रापि निरुक्तम् प्रथमम्। परम् एवं कृतेऽपि अस्य ग्रन्थस्य किं वा प्रयोजनं सामान्यानामिति प्रश्नः सञ्जायते खलु। तत्प्रश्नस्य अत्रैव समाधीयते-

## सामाजिकप्रयोजनम्

यास्कनिरुक्तशब्दनिर्वचनानां गवेषणात्मकम् अध्ययनम् इत्यस्य ग्रन्थस्य अध्ययनेन निरुक्तस्य निर्वचनशैली बुध्यते। सा च शैली निरुक्ताध्ययनेनैव ज्ञायते खल्विति प्रश्ने- न। निरुक्तस्याध्ययनाय भाष्याणाम् आवश्यकता वर्तते। किन्तु यास्कस्य वाक्यानि सूत्राणीव कठिनानि वर्तन्ते। अनेनैव कारणेन लोके दुर्गाचार्यस्य भाष्यम् प्रचलितम्। एवमेव दुर्गाचार्यस्यापि भाष्यं केवलपण्डितानां सुलभबोधकम्। परं सामान्यानां पण्डितेतराणां निरुक्ताध्ययने का वा स्थितिः इति चेत्- अयं महाप्रबन्धः निरुक्तं ग्रन्थं सरलरूपेण बोधयति। यथा अस्य द्वितीयाध्याये

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

निरुक्तालोचनके निरुक्तस्य स्थूलावलोकनम् इत्युपशीर्षिकायां निरुक्तग्रन्थस्थानां सर्वेषां विषयाणां एकैकत्वेन पञ्चपञ्चाशत्संख्याकेन सङ्गृहीत्वा तत्पाठः तद्वर्णनञ्च तत्रैव दरीदृश्यते। तेनायं महाप्रबन्धः अधीतव्यः।

एवमेव निरुक्तोक्तनिर्वचनप्रक्रियायाः ज्ञानाय निरुक्ताध्ययनं विद्यार्थीनां कष्टतरो विषयः। परं निर्वचनक्रमाज्ञानेन न कोऽपि निर्वचनं कर्तुं समर्थः। अत्र अन्योन्याश्रयदोषः फलति। तद्दोषनिवारणाय निर्वचनोपयुक्तानां सर्वेषां प्रक्रियाणामत्र निर्वचनक्रमनिर्णय इति चतुर्थेऽध्याये तेषामेकैकत्वेन सङ्ग्रहः कृतः।

एवमेव विद्यार्थीनां निरुक्तसमीक्षासहकारार्थं अग्रद्वयोः प्रथमद्वितीययोः अध्याययोः यास्कमधिकृत्य तस्य कालदेशादिकं निरुक्तमधिकृत्य तस्य वेदाङ्गत्वं तत्रत्याः विज्ञानांशाः, दार्शनिकांशाः, व्याकरणांशाश्च प्रतिपादिताः।

तथा च प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति वाक्यम् महाभाष्यकारेण प्रतिपादितम्। एनमेव वाक्यमनुसृत्य अस्य ग्रन्थस्य यत्र कुत्रापि किञ्चिदपि च प्रयोजनं भवेत् इति चिन्तनेन अयं महाप्रबन्धः रचितः।

**॥ इति शम् ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

# अधीतग्रन्थसूची

## संस्कृतपुस्तकानि


1. **अथर्ववेदसंहिता**

   प्र॥ वैदिक पुस्तकालय, अजमेर - २०१७.

2. **अमरकोषः (अमरसिंहविरचितः)**

   सं॥ वासुदेव शर्मा, प्र॥ चौखम्बा कृष्णदास अकादमी, वाराणसी - २०१३.

3. **अष्टाध्यायीसूत्रपाठः (पाणिनीयः)**

   सं॥ प्र॥ शङ्कररामशास्त्री, मैलापुर - १९३७.

4. **आश्वलायनश्रौतसूत्रम्**

   सं॥ प्र॥ श्री कुबेरनाथ शुक्ला, वाराणसी - १९५५.

5. **ऋग्वेदसंहिता**

   प्र॥ चौखम्बा संस्कृत प्रतिष्ठानम्, देहली - २०१६.

6. **ऐतरेयब्राह्मणम्**

   सं॥ नारायण आपटे, प्र॥ आनन्दाश्रमम्, पूणी - १८९६.

7. **ऐतरेयब्राह्मणम् (सुखप्रदावृत्तिसहितम्)**

   सं॥ प्र॥ पि.अनन्तकृष्णशास्त्री, तिरुवनन्तपुरम् - १९४२.

8. **ऐतरेयारण्यकम्**

   सं॥ बाबाशास्त्री फडके, प्र॥ आनन्दाश्रमम्, पूणी - १९९२.

9. **ऐतरेयालोचनम्**

   ले॥ सत्यव्रत सामश्रमी, प्र॥ हितव्रत चट्टोपाध्याय, कोलकत्ता - १९०६.

10. **गादाधरी (गदाधरभट्टकृता)**

सं॥ श्री कीर्त्यानन्द झा & सत्कारिशर्मा वङ्गीयः, प्र॥ चौखम्बा संस्कृत सिरीज, वाराणसी - १९७०.

11. **गोपथब्राह्मणम्**

सं॥ राजेन्द्रलालमित्रः, प्र॥ इण्डोलाजिकल बुक हाउस, वाराणसी - १९७२.

12. **छन्दःशास्त्रम् (पिङ्गलरचितम्)**

सं॥ पं० केदारनाथः पं० वासुदेवशर्मा, प्र॥ पाण्डुरङ्ग जावजी, मुम्बई - १९२७.

13. **छान्दोग्यब्राह्मणम्**

सं॥ पं० गौरीनाथशास्त्री, प्र॥ संस्कृत विद्यालयः, कोलकत्ता - १९५८.

14. **तर्कसङ्ग्रहः (अन्नम्भट्टविरचितः)**

सं॥ आचार्य शेषराजशर्मा, प्र॥ चौखम्बा सुरभारती प्रकाशन, वाराणसी - २००४.

15. **तैत्तिरीयब्राह्मणम्**

सं॥ पं० आर्.शामशास्त्री, प्र॥ प्राच्यविद्यासंशोधनालयः, मैसूरु - १९२१.

16. **त्रयीपरिचयः**

ले॥ सत्यव्रत सामश्रमी, प्र॥ हितव्रत चट्टोपाध्याय, कोलकत्ता - १८९३.

17. **नारदीयमनुसंहिता**

सं॥ पं० साम्बशिवशास्त्री, प्र॥ श्रीसेतुलक्ष्मीमहाराज्ञीशासनम्, अनन्तशयनम् - १९२९.

18. **निरुक्तम् [भागः - I] (निघण्टुयुतं यास्कमुनिप्रणीतञ्च)**

सं॥ सत्यव्रत सामश्रमी, प्र॥ एश्याटिक सोसाइटी, कोलकत्ता - १८८२.

19. **निरुक्तम् [भागः - II] (निघण्टुयुतं यास्कमुनिप्रणीतञ्च)**

सं॥ सत्यव्रत सामश्रमी, प्र॥ एश्याटिक सोसाइटी, कोलकत्ता - १८८३.

20. **निरुक्तम् [भागः - III] (निघण्टुयुतं यास्कमुनिप्रणीतञ्च)**

सं॥ सत्यव्रत सामश्रमी, प्र॥ एश्याटिक सोसाइटी, कोलकत्ता - १८८६.

21. **निरुक्तम् [भागः - IV] (यास्कमुनिप्रणीतं)**

सं॥ सत्यव्रत सामश्रमी, प्र॥ एश्याटिक सोसाइटी, कोलकत्ता - १८९१.

22. **निरुक्तम् (निघण्टुपाठसमुपेतम्)**

सं॥ पं० शिवदत्तशर्मा, प्र॥ खेमराज कृष्णराजश्रेष्ठी, मुम्बई - १९८२.

23. **निरुक्तम् (यास्कमुनिप्रणीतम्)**

सं॥ पं० मुकुन्दझा शर्मा, प्र॥ चौखम्बा संस्कृत प्रतिष्ठान, देहली - २००८.

24. **निरुक्त(लघु)विवृतिः**

सं॥ श्री मुकुन्दशर्मा, प्र॥ तुकाराम जावजी, मुम्बई - १९१२.

25. **निरुक्तसम्मर्शः**

ले॥ स्वामी ब्रह्ममुनिप्रिरिव्राजको विद्यामार्ताण्डः, प्र॥ आर्य साहित्य मण्डल लि०, अजमेर - १९६६.

26. **निरुक्तसमुच्चयः**

ले॥ आचार्यो वररुचिः, प्र॥ रामलाल कपूर ट्रस्ट, सोनिपत (हरयाणा) - १९८३.

27. **निरुक्तालोचनम्**

ले॥ सत्यव्रत सामश्रमी, प्र॥ हितव्रतसामकण्ठः, कोलकत्ता - १९०७.

28. **न्यायदर्शनम् (गौतममुनिरचितम्)**

सं॥ प्र॥ पं० छज्जूरामशास्त्री विद्यासागर, देहली - १९६६.

29. **न्यायसिद्धान्तमुक्तावली**

ले॥ विश्वनाथपञ्चाननभट्टाचार्यः, प्र॥ चौखम्बा सुरभारती प्रकाशन, वाराणसी - २००६.

30. **पतञ्जलिमुनिविरचितम् महाभाष्यम् [भागः - II]**

सं॥ पं० युधिष्ठिरमीमांसकः, प्र॥ प्यारेलाल द्राक्षादेवी न्यास ट्रस्ट, देहली - १९७३.

31. **परमलघुमञ्जूषा (नागेशभट्टरचिता)**

सं॥ पं० पर्वतीयनित्यानन्द पन्तः, प्र॥ चौखम्बा संस्कृत संस्थान, वाराणसी - १९१७.

32. **पाणिनीयव्याकरणमहाभाष्यम्**

सं॥ पं० भार्गवशास्त्री, प्र॥ चौखम्बा संस्कृत प्रतिष्ठान, देहली - १९८७.

33. **महाभाष्यम् (पातञ्जलम्)**

सं॥ पं० क्षितीशचन्द्र चटर्जी, प्र॥ ए.एम्.सि, कोलकत्ता - १९७२.

34. **मीमांसादर्शनम् (जैमिनिप्रणीतम्)** - I

सं॥ पं० श्रीमहाप्रभुलालगोस्वामी, प्र॥ तारा प्रिंटिंग वर्क्स, वाराणसी - १९८४.

35. **मीमांसादर्शनम् (जैमिनिप्रणीतम्)** - II

सं॥ पं० श्रीमहाप्रभुलालगोस्वामी, प्र॥ तारा प्रिंटिंग वर्क्स, वाराणसी - १९८७.

36. **मीमांसादर्शनम् (जैमिनिप्रणीतम्)** - III

सं॥ पं० श्रीमहाप्रभुलालगोस्वामी, प्र॥ तारा प्रिंटिंग वर्क्स, वाराणसी - १९८७.

37. **मीमांसादर्शनम् (जैमिनिप्रणीतम्)** - IV

सं॥ पं० श्रीमहाप्रभुलालगोस्वामी, प्र॥ तारा प्रिंटिंग वर्क्स, वाराणसी - १९८४.

38. **योगदर्शनम् (काव्यव्याख्यासमेतम्)**

सं॥ पं० विद्यासागरवर्मा, प्र॥ राष्ट्रीयसंस्कृतसंस्थानम्, देहली - २००८.

39. **वाचस्पत्यम्** [I-IV]

प्र॥ चौखम्बा संस्कृत सिरीज, वाराणसी - १९६२.

40. **वैदिकवाङ्मयस्येतिहासः**

सं॥ डो. ब्रह्मानन्द त्रिपाठी, प्र॥ चौखम्बा सुरभारती प्रकाशन, वाराणसी - २००९.

41. **वैदिकसाहित्यचरित्रम्**

सं॥ पं० पि.पि.सुब्रह्मण्यशास्त्री, प्र॥ आर्.सुब्रह्मण्यशास्त्री, पालक्काट् - १९२७.

42. **वैयाकरणसिद्धान्तकौमुदी (प्रथमो भागः)**
सं॥ पं० गिरिधरशर्मा & पं० परमेश्वरानन्द शर्मा, प्र॥ मोतीलाल बनारसीदास, देहली - २०१४.

43. **वैयाकरणसिद्धान्तकौमुदी (द्वितीयो भागः)**
सं॥ पं० गिरिधरशर्मा & पं० परमेश्वरानन्द शर्मा, प्र॥ मोतीलाल बनारसीदास, देहली - २०१०.

44. **वैयाकरणसिद्धान्तकौमुदी (तृतीयो भागः)**
सं॥ पं० गिरिधरशर्मा & पं० परमेश्वरानन्द शर्मा, प्र॥ मोतीलाल बनारसीदास, देहली - २०११.

45. **वैयाकरणसिद्धान्तकौमुदी (चतुर्थो भागः)**
सं॥ पं० गिरिधरशर्मा & पं० परमेश्वरानन्द शर्मा, प्र॥ मोतीलाल बनारसीदास, देहली - २०११.

46. **व्याकरणमहाभाष्यम् (तृतीयो भागः)**
सं॥ पं० भगवान् देवाचार्यः, प्र॥ हरयाणा साहित्य संस्थानम्, , रोहतक - १९६३.

47. **शतपथब्राह्मणम् [भागाः १-९]**
सं॥ सत्यव्रत सामश्रमी, प्र॥ एश्याटिक सोसाइटी, कोलकत्ता, १९०३ - १९११.

48. **शुक्लयजुर्वेदसंहिता**
सं॥ पं० वासुदेव लक्ष्मणशास्त्री पणशीकर, प्र॥ पाण्डुरङ्ग जावजी, मुम्बई - १९२९.

49. **श्वेताश्वतरोपनिषत् (शाङ्करभाष्यसहितम्)**

प्र॥ गीताप्रेस, गोरखपुर - १९९५.

50. **सांख्यकारिका (ईश्वरकृष्णप्रणीता)**

सं॥ पं० श्रीविष्णुप्रसाद शर्वणा, प्र॥ चौखम्बा संस्कृत सिरीज, वाराणसी - १९२२.

51. **सामवेदव्याख्या**

सं॥ पं० हरिशरण सिद्धान्तालङ्कारः, प्र॥ दयानन्द वैदिक पुस्तकालय, देहली - १९७३.

52. **सामवेदसंहिता**

सं॥ पं० जयदेवशर्मा, प्र॥ आर्य साहित्य मण्डल लि०, अजमेर - १९८८.

53. **सामवेदसंहिता**

प्र॥ वैदिक पुस्तकालय, अजमेर - २०१४.

## हिन्दीपुस्तकानि

54. **ऐतरेय ब्राह्मण**

अनु॥ पं० गङ्गाप्रसाद उपाध्याय, प्र॥ हिन्दी साहित्य सम्मेलन, प्रयाग - १९६५.

55. **निघण्टु-निर्वचन-मीमांसा**

ले॥ पं० विश्वबन्धु, प्र॥ परिमल पब्लिकेशन, देहली - २०१३.

56. **निरुक्त (यास्कविरचित)**

सं॥ पं० शिवनारायणशास्त्री, प्र॥ श्रीमती तारादेवी कोकिला, देहली - १९७२.

57. **निरुक्त के पाँच अध्याय**

अनु॥ पं० शिवनारायणशास्त्री, प्र॥ मोतीलाल बनारसीदास, देहली - १९७१.

58. **निरुक्तमीमांसा**

ले॥ पं० शिवनारायणशास्त्री, प्र॥ इण्डोलाजिकल बुक हाउस, वाराणसी - १९७०.

59. **निरुक्तसारनिदर्शन**

ले॥ डा. कुंवरलाल 'व्यासशिष्य', प्र॥ इतिहास विद्या प्रकाशन, देहली - १९६२.

60. Nirukta of Yàska (**हिन्दी**)

सं॥ प्रो. उमाशङ्करशर्मा, प्र॥ चौखम्बा विद्या भवन, वाराणसी - १९७८.

61. **वेदत्रयपरिचय**

सं॥ डा. ओम्प्रकाश पाण्डेय, प्र॥ हिन्दी समिति, लखनऊ - १९७४.

62. **वेदार्थदीपक (निरुक्तभाष्य)**

भाष्य॥ पं० चन्द्रमणि विद्यालङ्कार पालीरत्न, प्र॥ आर्ष कन्या गुरुकुल, देहली - १९८१.

63. **वैदिक वाङ्मय का इतिहास**

सं॥ पं० सत्यश्रवा, प्र॥ प्रणव प्रकाशन, देहली - १९७४.

64. **वैदिक व्याकरण**

अनु॥ डा. सत्यव्रतशास्त्री, प्र॥ मोतीलाल बनारसीदास, देहली - १९७१.

65. **सामवेद्**

सं॥ पं० श्रीरामशर्मा आचार्य, प्र॥ संस्कृति संस्थान, बरेली - १९६५.

66. **हिन्दीनिरुक्त**

सं॥ पं० सीतारामशास्त्री, प्र॥ मुंशूराम मनोहरलाल, देहली - १९६२.

## आङ्ग्लपुस्तकानि

67. **The Aitareya âranyaka**

Ed. Arthur Berriedale Keith, Pub. The Clarendon Press, Oxford - 1909.

68. **The Arctic Home In the Vedas**

Auth. Lokamanya Bal Gangadhar Tilak, Pub. Ms. Tilak Bros, Pune - 1903.

69. **Indices & Appendices of Nighaõñu and Nirukta**

Auth. Pt. Laxman Sarup, University of Panjab - 1929.

70. **Jàska's NIrukta**

Ed. Rudalph Roth, Gottingen - 1852.

71. **The Nighaõñu and The Nirukta**

Ed. Pt. Laxman Sarup, Mothilal Banarsidass, Varanasi - 1964.

72. **The Science of Etymology**

Auth. Walter W. Skeat, Pub. The Clarendon Press, Oxford - 1912.

73. **Tarkasaïgraha of Annambhaññа**

Ed. Yashwanth Vasudev Athalye & Mahadev Rajaram Bodas, Pub. Dept. of EducatIon, Maharashtra - 1963.

74. **Yàska's Nirukta and The Science of Etymology**

Ed. Bishnupada Bhattacharya,

Pub. K.L.Mukhopadhyay, Calcutta - 1958.

## कर्नाटपुस्तकानि

75. **ಅಮರಸಿಂಹನ ನಾಮಲಿಂಗಾನುಶಾಸನ (ಅಮರಕೋಶ)**

ಸಂ|| ವಿದ್ವಾನ್ ಎನ್.ರಂಗನಾಥಶರ್ಮಾ, ಪ್ರ|| ಕಾವ್ಯಾಲಯ,

ಮೈಸೂರು - ೨೦೧೪.

76. **ನಿರುಕ್ತ (ಶಬ್ದಾರ್ಥ ನಿರ್ವಚನಶಾಸ್ತ್ರ)**

ಲೇ|| ಡಾ. ಎನ್.ಎಸ್.ಅನಂತರಂಗಾಚಾರ್, ಪ್ರ|| ಡಿ.ವಿ.ಕೆ.ಮೂರ್ತಿ,

ಮೈಸೂರು - ೨೦೦೬.

77. **ನಿರುಕ್ತಂ (ಶ್ರೀ ಯಾಸ್ಕಾಚಾರ್ಯಪ್ರಣೀತಂ) [ನಿಘಂಟು ಸಹಿತ]**

ಸಂ|| ಡಾ. ಕೆ.ನಾರಾಯಣ ಭಟ್ಟ, ಪ್ರ|| ವೇದಾನಂದ ಪ್ರಕಾಶನ,

ಕಟೀಲು (ದ.ಕ. ಜಿಲ್ಲೆ) - ೧೯೯೮.

78. **ವೈದಿಕ ಸಾಹಿತ್ಯ ಚರಿತ್ರೆ**

ಸಂ|| ಡಾ.ಎನ್.ಎಸ್.ಅನಂತರಂಗಾಚಾರ್, ಪ್ರ|| ಪ್ರಸಾರಾಂಗ,

ಮೈ.ವಿ.ವಿ., ಮೈಸೂರು - ೨೦೬೮.

79. **ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯ ಪರಿಚಯ**

ಸಂ|| ಡಾ. ಮಹದೇವ ನಾ. ಜೋಶಿ, ಪ್ರ|| ರೂಪಾ ಪ್ರಕಾಶನ,

ಧಾರವಾಡ - ೨೦೦೨.

## आन्ध्रपुस्तकानि

80. **ನಾಮಲಿಂಗಾನುಶಾಸನಮು (ಶ್ರೀಮದಮರಸಿಂಹ ವಿರಚಿತಮು)**

ಸಂ|| ವೇಮೂರು ತಿರುವೇಂಗಡತ್ತಾನ್ ಸೆಟ್ಟಿ,

ಏಶಿಯನ್ ಎಜುಕೇಷನಲ್ ಸರ್ವೀಸೆಸ್, ನ್ಯೂಢಿಲ್ಲೀ - ೧೯೮೮.

81. **ಪರಮಲಘುಮಂಜೂಷ (ನಾಗೇಶಭಟ್ಟ ವಿರಚಿತಮು) [ಪ್ರಥಮ ಭಾಗಮು]**

ಸಂ|| ಆಚಾರ್ಯ ಶ್ರೀ ಸತ್ಯನಾರಾಯಣ ಮೂರ್ತಿ, ತಿರುಮಲ ತಿರುಪತಿ ದೇವಸ್ಥಾನಮುಲು, ತಿರುಪತಿ - ೧೯೯೯.

82. **ವೈದಿಕ ವಾಙ್ಮಯ ಚರಿತ್ರಮು**

ಸಂ|| ಸತ್ಯನಾರಾಯಣ ಚೌದರಿ, ಭಾಷಾಪೋಷಕ ಗ್ರಂಥಮಂಡಳಿ,

ರೇಪಲ್ಲೆ - ೧೯೩೧.

## वृत्तलेखाः

1. **ब्राह्मणों में प्राप्त निर्वचनों के प्रकार और प्रर्याय-योजना**

ले॥ डा. सुधीरकुमार गुप्तः, प्रवाचकः, राजस्थान वि.वि., जयपुर

प्र॥ गुरुकुलपत्रिका, अगस्त, सितम्बर, अक्तूबर - १९६६.

2. **यास्कीय निर्वचन (हिन्दी)**

ले॥ डा. सुधीरकुमार गुप्तः, प्रवाचकः, राजस्थान वि.वि., जयपुर

प्र॥ वेदवाणी पत्रिका, वर्ष-१७, अङ्क १-३, १९६५.

3. **वेदानां सृष्टिः**

ले॥ डा. सुधीरकुमार गुप्तः, प्रवाचकः, राजस्थान वि.वि., जयपुर

प्र॥ त्रिविधा पत्रिका, देहली - १९६२.

4. **वैदिक भाषा के नैरुक्त अध्ययन की रूपरेखा**

ले॥ डा. सुधीरकुमार गुप्तः, प्रवाचकः, राजस्थान वि.वि., जयपुर

प्र॥ विश्वम्भरा पत्रिका, लखनऊ - १९६८.